# मोक्षमीमांसा

( हिन्दी-व्याख्यासहिता )

—स्वामी रामलक्ष्मणाचार्यः

डिप्टी श्रीनरेन्द्रनाथग्रन्थमालायाः प्रथमं पुष्पम्
एतत् प्रस्तावकः चौधरी पं० श्रीरामदत्त शर्मा
विद्यामन्दिरस्य सर्वविध सहायकः ।

# मोक्षमीमांसा

( हिन्दी-व्याख्यासहिता )

रचयिता
स्वामी रामलक्ष्मणाचार्यः
दार्शनिकसार्वभौमेश–लब्धस्वर्णपदक,
व्याकरण–न्याय–वेदान्त–मीमांसा–साहित्याचार्य, सर्वदर्शन पोस्टाचार्य

सम्पादकः
डॉ० नविकान्त झा
( व्याकरण-वेदान्ताचार्य, एम० ए०, .पी-एच० डी०
अध्यापक : वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी )

प्रस्तावनालेखकः
पं० श्री जगन्नाथोपाध्यायः
पालिविभागाध्यक्षः
वाराणसेय संस्कृत विश्वविद्यालयः, वाराणसी ।

परमवैष्णव डिप्टी

पं० श्री नरेन्द्रनाथ शर्मा

की

पावन-स्मृति में

समर्पित

—रामलक्ष्मणाचार्य

# लेखक की अन्तिम प्रार्थना

धार्मिक महानुभाव ! उदारचरित ! सामान्य एवं विशेष धर्म के पोषक !

आप सहृदयों के समक्ष कुछ लिखते भी संकोच होता है; क्योंकि मुझमें न तो उस तरह की सद्विद्या ही है, और न सदाचार ही है। फिर भी विश्व का अनुगमन करना ही पड़ता है। इसी अभिप्राय से यह एक छोटी पुस्तक मोक्षमीमांसा नाम की लिखी गई है। पर प्रभु की इच्छा ऐसी ही थी कि मैं इसके प्रकाशन से चार-पाँच वर्ष पूर्व ही मोतिया बिन्दु के कारण अन्धा होकर बैठ गया। जिसमें कि मूल पुस्तक तथा हिन्दी व्याख्या का पुनः निरीक्षण नहीं कर सका। अतएव संभव है कि ग्रन्थ में असंबद्धता तथा भाषा आदि की अन्यान्य त्रुटियाँ रह गई हों।

अतः आप विज्ञ सुधीजन उन दोषों की उपेक्षा करते हुए—

"जौं बालक कह तोतरि बाता, सुनहि मुदित मन पितु अरु माता"।

गोस्वामी जी की इस उक्ति को ध्यान में रखकर मेरे उत्साह को बढ़ाने की कृपा करें।

प्रार्थी

रामलक्ष्मणाचार्य

# मोक्षविषये किञ्चित्

भारतीयदर्शनस्यावान्तरप्रस्थानानां कतिपयसमानयूथ्येषु अन्तर्भावने किं विनिगमकं स्यादिति सम्यगविमर्शे दर्शनेषु मिथः सारूप्यवैरूप्य-बहुत्वाद् दुःशक इव प्रतिभाति। प्राचीनाभियुक्तैः आस्तिकनास्तिकाभ्यां वैदिकावैदिकाभ्यां च द्विधा क्रियमाणो भेदः प्रायो लभ्यते। प्राचीनतम-ग्रन्थेषु तु काचिद् एवंविधा सुस्पष्टं व्यतिभेदिनी यूथ्यपद्धतिः नाङ्गीकृता दृश्यते। परवर्तिभिस्तु आस्तिकनास्तिकविभजनस्यापि निमित्तं कदाचित् परलोकाङ्गीकारानङ्गीकारौ, कदाचिच्चेश्वराङ्गीकारानङ्गीकारौ स्वीक्रियेते। किन्त्वेवंविधः सर्वोऽप्यभ्युपगमो शास्त्रस्वभावं नानुवर्त्तते। तथाहि—प्रथमपक्षाभ्युपगमे चार्वाकान् व्यतिरिच्यान्ये सर्वेऽपि आस्तिक-नास्तिकाभिधाना आस्तिकत्वेनैवाभिमता भवेयुः, द्वितीये च ईश्वरा-नङ्गीकाराद् बौद्धजैनवत् प्राचीनाः सांख्य-वैशेषिक-मीमांसकाश्चापि सामस्त्येन नास्तिका एव स्युः, जगत्कर्तृत्वेनेश्वरानङ्गीकाराच्च योगिनः शाङ्करवेदान्तिनश्चापि नास्तिकप्राया भवेयुः। इत्थमेव वेदप्रामाण्या-प्रामाण्यानुरोधेन सर्वे आगमप्रामाण्यवादिनः सांख्यबौद्धजैनसमवर्त्तिनः सन्तः शैव-शाक्त-पाशुपत-कापालिकप्रभृतयः साक्षात्, पाञ्चरात्रागमादि-प्रतिपन्नाः सर्वेऽपि प्राचीना वैष्णवाः, उपनिषन्मात्रपरमप्रमाणवादिनः शाङ्कराद्वैतिनश्च परम्परया अवैदिकत्वेनैव परिगणनीयाः स्युः। अत इत्थं विधीयमानो भेदः कथञ्चिदपि न तत्त्वज्ञानमनुधावति, न च सम्प्रदाय-क्रमं पुष्णाति। वस्तुतस्तु प्राचीनदर्शनानामाकरग्रन्थेषु, उपनिषत्सु, बौद्धानां त्रिपिटकेषु, अन्येषु च प्राचीनसांख्य-वैशेषिक-गौतमीयमूल-प्रस्थानेषु धर्मसम्प्रदायावेशस्तथाविधो न दृश्यते, येन तत्त्वालोचनमेव कथञ्चिन्न्यक्कृतं भवेद्, अथ च दर्शनशास्त्राद् धर्मशास्त्रमनन्तरितं सन्मिथः संकीर्णं स्यात्; किन्तु सम्प्रदायप्रवर्त्तकाचार्याणाम्, विशेषतो

दर्शनसूत्रव्याख्यातॄणां भाष्यटीकादौ कदाचित् शब्दप्रमाणचिन्ताव्याजेन कदाचित् सम्प्रदायाचारप्रामाण्यस्थापनानुरोधेन धर्माभिधेयानि दर्शनेषु निविष्टानि। पश्चाच्च तदनुरोधेनैवान्येषु दर्शननिबन्धव्याख्यातारो दर्शनाननुगं दर्शनोपजीव्यं स्वस्वसम्प्रदायाभिप्रेतं तत्त्वमभिनियोजितवन्तः। अतएव धर्मसम्प्रदायानवलम्ब्य प्रवर्त्तितो दर्शनप्रस्थानविभागः सार्वत्रिकः सार्वकालिकः स्वयूथ्यसंग्राहकश्च नैव संवृत्तः।

धर्मसम्प्रदायप्रवर्त्तितविभागापेक्षया तत्त्वज्ञानसाधर्म्यवैधर्म्यानुरोधेन-कृतो विभागः अधिकं दर्शनशास्त्रानुकूलो भवति। तथाहि—परमार्थतत्त्वदृष्ट्या अद्वैतद्वैतवादाभ्याम्, आत्मानात्मवादाभ्याम्, बाह्यपदार्थदृष्ट्या वस्तुसदसद्वादाभ्याम्, सृष्ट्युत्पत्तिदृष्ट्या परिणाम-संघात-आरम्भ-विवर्त्तवादैः, ख्यातिदृष्ट्या च सद्—असत्—सदसद्—अन्यथा—अनीर्वचनीयवादादिभिर्विहितो भेदः समञ्जसो भवति। अयं क्रमः प्रायशोः प्रचलितं दर्शनानुशासनं विच्छिद्य बहुत्र सम्प्रदायानुशासनं विच्छिद्यापि प्रवर्त्तते। एतद्वशादद्वैतवादे बौद्धानां शून्यविज्ञानवादौ, वेदान्तिषु ब्रह्माद्वैतवादः, आगमिकेषु शैवशाक्तैकदेशिनः शब्दाद्वैतवादिनश्च समञ्जसा भवन्ति। तदितरे च सांख्य—वैशेषिक—नैयायिकाः वैष्णववेदान्तिनः आगमैकदेशिनः शैवाः शाक्ता, बौद्धैकदेशिनः थेरवाद—वैभाषिक—सौत्रान्तिकाः जैनाश्च द्वैतवादे (अनेकतत्त्ववादे) संहताः स्युः। उत्पाददृष्ट्या परिणामवादे—सांख्य-योगौ जैना वैष्णवाः सर्वे चागमिकाः, आरम्भवादे वैशेषिका गौतमीयाः, संघातारम्भवादे थेरवाद—वैभाषिक—सौत्रान्तिकाः, विवर्त्तवादे विज्ञानवाद—शून्यवाद—ब्रह्मवाद—शब्दब्रह्मवादाः संगृह्यन्ते। एतया दिशा दर्शनविभागानां पर्यालोचनेनेदं फलति यद् यद्यपि भारतीयदर्शनानि धर्मसम्प्रदायप्रेरणयाऽपि संव्यक्तसंस्तथापि न तदेव सर्वस्वभूतं तेषां तत्त्वज्ञानप्रवणानाम्, अपि तु तैरभियुक्तैः प्राधान्येन प्रमेयप्रमाणविषये स्वातन्त्र्येण स्वोपज्ञया च विमृष्टः सिद्धान्तितः समुपबृंहितश्च। विदितमेवान्वीक्षिक्यां सिद्धानां पदार्थानां संस्थित्या इत्थंभावव्यवस्थया च कस्यचिद् वादस्य सिद्धान्तभावः।

स च वादः कदाचित् सर्वतन्त्राविरुद्धत्वेन, कदाचिद् अन्यानुषङ्गविधया अधिकरणसिद्धान्तेन, कदाचिद्वान्यनिरपेक्षस्वतन्त्राभ्युपगमद्वारा सिद्धान्तितो भवति। अस्मिंश्चाभ्युपगमे प्रतिकूलतन्त्राणां राद्धान्तोऽपि सिद्धान्तत्वेनैवादरणीयो विमर्शनीयश्च भवति। दर्शनशास्त्राणामुद्गमे विकासे चास्यैव स्वतंत्राभ्युपगमवादस्य प्राधान्यम्। वस्तुतस्तु एतत्-प्राधान्यवशादेव प्रामाण्यं लभमाना आगमादयोऽप्युपजीवन्ति। अत एव च दर्शनप्रस्थानेषु प्रमेयाणां प्रमाणानाञ्च संख्या-लक्षण-ग्राह्यादिविषये विप्रतिपत्तयो विसंवदमाना भवन्ति। एतेन च कुत्रचित् प्रमाणप्रमेयदृष्ट्या आस्तिक-नास्तिकप्रस्थानयोर्वैदिकावैदिकयोश्च परस्परं विषयसाम्यं सिद्धान्तसाम्यं क्वचिच्च द्वयोर्वैदिकयोरास्तिकयोरेव, अवैदिकयोर्नास्तिकयोरेव वा परस्परं महद्वैधर्म्यं दृश्यते। मन्ये, स्वतन्त्राभ्युपगम एव दर्शनमहानगरप्रवेशस्य भारतीयमनीषिमान्यो राजमार्गः। अयं च न केवलं तत्तत्पुरातनभारतीयदर्शनमहाशालासु प्रवेशायैव प्रशस्यते अपि तु नवनवानां दर्शनानामुद्गमाय सोपानपथमप्यवतारयति।

आशय-प्रयोग-लक्ष्यभेदाद् दर्शनभेद इति कृत्वापि भारतीयदर्शनानां विभजनाय अस्त्यन्यतमः समीचीनो विनिगमकः। तत्र आशयः— स्वस्य परेषां वा समुद्धरणकामता। प्रयोगः—समुद्धारोपायो ज्ञानं, कर्म-भक्तिर्वा तत्समुच्चयो वा करुणा वा। लक्ष्यं समुद्धरणस्वरूपम्, दुःखध्वंसो वा तत्पूर्वा सुखावाप्तिः स्वरूपावाप्तिर्वा। यद्यपि आशयः प्रयोगश्च न साक्षाद् दर्शनप्रयोजकस्तथापि अविरोधेन सर्वेषां भारतीयदर्शनानां लक्ष्यत्वेन परमपुरुषार्थभूतस्य मोक्षस्योपपादकत्वाद् द्वयोर्दर्शनाङ्गत्वं पर्यवस्यति। योगस्य तन्त्रोपासनानाञ्च दर्शनत्वेन संग्रहो भारतीयदर्शनेषु सर्वथा प्रसिद्ध्यति, अथ च भक्तिदर्शनकर्ममीमांसादर्शनेत्याद्यभिधानैः प्रयोगोपलक्षितं दर्शनत्वमप्यभियुक्तैः स्वीकृतम्। लक्ष्याभ्युपगमकारित्वात् तत्तद् योगानामङ्गीकारेऽध्यवसायरूपत्वाच्च आशयस्यापि तदङ्गत्वं नासमञ्जसम्। आशयभेदाद् यथा दर्शनभेदस्तथा बौद्धेषु श्रावक-प्रत्येक-बोधिसत्त्वयानभेदेन सुप्रसिद्धः। अन्यत्रापि चायं नात्य-

न्तमपरिचितः। अद्वैतवेदान्ते एकनानाजीववादिनां जीवन्मुक्तस्थितप्रज्ञानां च चर्या, वैष्णवेषु आचार्यनिष्ठाव्याजेनाचार्याणां दिव्यलोकस्थानां नित्यसूरीणां पार्षदानां च चर्या, जैनेषु केवलीनां तीर्थङ्कराणां च चर्या, तन्त्रागमेषु विद्येश्वराणां नित्यसिद्धानां च चर्या आशयभेदनिबन्धनैवानुसन्धातव्या। परमार्थतस्तु मोक्षमीमांसां वर्जयित्वा पूर्वसूचितधर्मसम्प्रदायाभिधेयवद् योग-कर्ममीमांसादयस्तास्ताश्चर्याश्च दर्शनबहिर्भूता एवेति मन्तव्यम्।

सर्वेषामेव भारतीयदर्शनानां सर्वतन्त्रसिद्धान्तभूतं लक्ष्यं निर्वाणमेवेति विदितप्रायम्। निर्वाणं मोक्षोऽपवर्गो निःश्रेयसमित्यादयो नाना–दर्शनसम्प्रदायेषु स्वेन स्वेन विशेषेण प्रयुज्यमाना अपि स्वारस्येन पर्यायभूता एव। एतत्समानलक्ष्यानुरोधेनैव सर्वाण्येवात्रत्यदर्शनानि भारतीयदर्शनत्वेन परिचीयन्ते। यद्यपि निर्वाणस्यावान्तरस्वरूपेऽस्ति दार्शनिकेषु तत्तन्मतविशेषस्तथापि अस्ति तत्राविशेष आत्यन्तिको दुःखोच्छेदः। दुःखोच्छेदाय साक्षात् परम्परया वा योगस्याङ्गीकारोऽपि सर्ववादिषु समान एव। मोक्षेण योजनाद् योग इति नाप्रसिद्धम्। दुःखस्वरूपविषये तदुच्छेदस्वरूपे चास्ति विमतिस्तथापि दुःखहानाय तदुपायोपादानं सर्वेषामविरुद्धम्। एवं सत्येव योगनिर्वाणयोरविलोमेनग्रहणाद् भारतीयदर्शनानामध्यात्मपरत्वं स्पष्टीभवति। आत्मनि अधीत्यत्र नित्येऽनित्ये वाऽऽत्मनीति युज्यते भेद आत्मानात्मवादिभ्यां स्वीकृतः। अत एव निर्वाणे आत्मनो लाभो विगमो वेति द्वयमेवाध्यात्मसहं भवति। एतेनेदं निर्गलति यद् भारतीयदर्शनानामध्यात्मपरत्वस्वीकृतौ वेदप्रामाण्याप्रामाण्ययोः ईश्वरसत्त्वासत्त्वयो आत्मानात्मवादित्वयोरन्यतर एव विनिगमको नावधारणीयः।

यद्यपि परवर्तिकाले दुःखोच्छेदि निर्वाणमित्यस्य सकलदर्शनेष्वविरोधेनाङ्गीकारः, तथापि तत्र प्रथमत्वेन सांख्य-वैशेषिक-बौद्धैरेव इत्थंकृत्वा तल्लक्ष्यीकृतमिति स्पष्टम्। तत्रापि भगवता बुद्धेन

तदनुयायिभिश्च यथा सकारणं सामस्त्येन च दुःखसत्यम्, सकारणं निरोधसत्यं ( मोक्षः ) च सम्यग् विवृतं तथाऽन्यत्र नैव लभ्यते। एतत्सत्यद्वयप्रख्यापनभङ्ग्यैव प्रतीत्यसमुत्पाद-क्षणभङ्ग-कर्मफल-निरात्म-निरीश्वर-निःस्वभावादयोऽनेकशो वादा बौद्धेषु पर्यवसिताः। न तिरोहितं यदुपनिषत्सु कर्मचितोऽस्य लोकस्य परस्य च अनित्यत्वाद् हेयत्वं बुद्धात् पूर्वतनैश्च जनकयाज्ञवल्क्यादिभिः प्रकटितम्, तथापि निःशेषं निरपवादं सर्वस्यैव दुःखत्वेन स्वीकारः, अन्यहेतुवर्जनपुरस्सरं च केवलं जीवगतायास्तृष्णाया अविद्याया एव दुःखनिदानत्वेनाङ्गीकारो बौद्धानां विशेषः। प्राय अविलोमेनायं दुःखवादः समुपलब्धप्राचीनसांख्य-वैशेषिकग्रन्थेषु सम्मतः। इत्थमुपनिषत्सु कथञ्चिद् अंशतोऽभिमतो दुःखोच्छेदवादः सांख्य-वैशेषिक-बौद्धैः प्रमाणप्रमेयतत्त्वनिर्धारणालोचनपुरस्सरं सकलभारतीयदर्शनानां लक्ष्यत्वेन शिरोभूतः प्रशस्यते।

सांख्यवैशेषिक-बौद्धा मोक्षस्य स्वरूपलक्षणं दुःखोच्छेदत्वेन; अन्ये तु उपलक्षणोपाधिविशेषणादिद्वारा तत्त्वेन तटस्थलक्षणं सुख-स्वरूपात्माद्यधिगतित्वेन वा स्वरूपलक्षणं स्वीकुर्वन्ति। अत एव सन्निर्वाणासन्निर्वाणवादाभ्यां मोक्षवादिनां द्विधा विभागः। तत्रासन्निर्वाणवादः-सत्ताशेषपूर्वक-सत्तानिःशेषपूर्वकदुःखध्वंसवादाभ्यां द्विविधः। तत्र मोक्षस्याभावरूपत्वेन द्वयोः साम्यम्, आत्मसत्ताशेष-निःशेषाभ्यां च भेदः। यद्यपि दुःखध्वंसोऽभावत्वेनैव, परिचीयते, तथापि तस्यालीकत्वं शून्यत्वं वा नार्थः, अपि तु सर्वदुःखोपरमः, तृष्णाक्षयः, अविद्यानाशः, शान्तः, अपवर्गः, अमृतम्, धर्मप्रविवेकः, धर्म-प्रविचयः, विवेकख्यातिः इत्यादिशब्दाभिधेयः प्रज्ञाप्रकर्ष एव। स्वसत्ताशेषपूर्वकदुःखध्वंसवादे सांख्या वैशेषिका गौतमीयनैयायिकाश्च प्रतिपन्नाः। सर्वदुःखेषु आत्मतृष्णाया अपि संग्रहाद् आत्मसत्तानिःशेषवादे सर्वे च बौद्धाः पर्यवसन्नाः। यद्यपि सकलबौद्धनिकायेषु नैरात्म्यवादोऽविरुद्धस्तथापि निर्वाणस्वरूपविषये परस्परं तेषां विचित्रस्थितयः—तथाहि स्थविरवादिनो

वैभाषिकाः, सर्वास्तिवादिनो विज्ञानवादिनश्च भावनिर्वाणवादिनः। एतेषां मते निर्वाणं वस्तुसद्धर्मः, यत्र समस्तदुखानां विलयश्चेतोविमुक्तिः आश्रयपरावृत्तिर्वा भवति। सौत्रान्तिकास्तु अभावनिर्वाणवादिनः, ते हि हेतुफलाभ्यामुभयथापि निर्वाणस्य वस्तुत्वं नाधिगच्छन्ति। माध्यमिकास्तु भावाभावादिविकल्पकोटिमुक्तं निर्विकल्पकमनिर्वचनीयं निर्वाणमभ्युपगच्छन्ति। वज्र-कालचक्र-सहजादियानिनस्तु निःस्वभावजृम्भितं महासुखरूपं निर्वाणमामनन्ति।

उपनिषत्सु असद्‌वादस्य भूरिशो निराकरणात् सन्निर्वाणवादो विशेषेण औपनिषदानामभ्युपगमः। सन्निर्वाणवादे दुःखाभावमुपाधित्वेनाङ्गीकृत्य सुखावाप्तिः स्वरूपावाप्तिः परमात्मस्वरूपावाप्तिर्वा मोक्षलक्षणं सम्मतम्। सन्निर्वाणवादिषु यद्यपि स्वरूपाधिगमः समानः, तथापि आत्मनः अणुत्व-विभुत्व—मध्यमत्वादिभिः परिमाणभेदः, एकत्व—बहुत्व–शेषत्व–शेषित्व–सविशेषत्व–निर्विशेषत्वादिभिः संख्यास्वरूपादिभेदः, एतद्‌विधभेदानुरोधेन स्वरूपावाप्तावपि भेदः सिद्ध्यति। अस्मिन् पक्षे सर्वेऽपि द्वैत-द्वैताद्वैत-निर्विशेष-सविशेष-शुद्धाचिन्त्याद्यद्वैतवादिनोवेदान्तिनः, भेदाभेदादिवादिनः शैवशाक्ताद्यागमिकाः जैनाश्चान्तर्भवन्ति। स्वर्गादिसुखैकयोगवादिनामर्वाचीनमीमांसकानां पक्षेऽपि दुःखध्वंसोपलक्षितात्मगतनिरतिशयसुखभोगस्वीकारात् कथंचिद् मोक्षः सिद्ध्यति। वस्तुतस्तु तेषां मते मोक्षो योगश्च नैव संगतः। सुखभोगस्यैव मोक्षस्वीकारात् लोकायतपूर्वमीमांसकयोः साम्यमिह। परलोकाङ्गीकारानङ्गीकाराभ्यां तु विशेषः।

इत्थं मया 'रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति' इत्युक्तिमनुस्मरता मोक्षविषये संक्षिप्तं स्वालोचनस्रोतो भूमिकामिषेण षट्शास्त्रपारदृश्वभिः पण्डितप्रकाण्डैः स्वामिरामलक्ष्मणाचार्यमहाभागैर्विरचितायां गम्भीरोदारतत्त्वज्ञानप्रवणायां मोक्षमीमांसायां निवेषितम्। तत्र तेषां परमभागवतानामौदार्यमेव हेतुः।

'नामूलं लिख्यते किञ्चित्' इत्यभियुक्तोक्तिमविकलमनुसरता आचार्येणास्यां मोक्षमीमांसायां तत्तच्छास्त्रपरिशीलितं मोक्षस्वरूपमनन्यथाभूतैः सूत्रवाक्यैः निबद्धम्। अत एवाचार्येण 'नास्तिको वेदनिन्दकः' इत्यभियुक्तोक्तिमनुसृत्यास्तिकनास्तिकभेदः शास्त्रसम्मत एव गृहीतः। तथाहि—"इत्थं खलु भारतीयदर्शनरीत्या कैवल्यादिमोक्षस्वरूपविवेचनं तावदारभ्यते। तत्र हि भारतीयदर्शनानि खलु आस्तिकनास्तिकभेदभिन्नानि द्विविधान्येव। तेषु च ये हि मानवा वेदान् प्रमाणत्वेनाङ्गीकुर्वन्ति तेऽत्रास्तिकपदवाच्याः। तेषामेव च दर्शनानि आस्तिकदर्शनपदाभिधेयानि। ये तु तान् वेदान् प्रमाणत्वेन नाङ्गीकुर्वन्ति त एवेह नास्तिकपदप्रतिपाद्याः। तेषामेव च दर्शनान्यपि नास्तिकदर्शनपदव्यपदेश्यानि सन्तीति तात्पर्यमत्र वृद्धानाम्" इति। अयं निबन्धो मोक्षस्वरूपबुभुत्सूनां कृते यथा झटिति इदमित्थन्तया बोधकस्तथैवं प्रमाणभूतोऽपि येनैतस्य वाक्यानि लेखकैः स्वनिबन्धादिप्रामाण्यायापि समुद्धर्त्तुं शक्यते। प्रायः संग्रहपुस्तकेष्वपि मोक्षविषये दर्शनानां सकलावान्तरप्रस्थानानामेकत्रपरिचयो नोपलभ्यते। अस्मिन्निबन्धे न तेषामेव परिचयः, अपि तु सम्प्रदायशास्त्राण्युद्धृत्य शुद्धविशिष्टाद्वैतवादनाम्ना रामानन्ददर्शनमपि संगृहीतम्। इदानीं श्रीस्वामिरामलक्ष्मणाचार्याः रामानन्दसम्प्रदायस्य शिरोभूता विद्वांसः सन्ति, अतस्तेषामयमभ्युपगमः समीचीन एव। वस्तुतोऽन्यदर्शनानुकारमात्रं विहाय रामानन्दाचार्याणामभिमतं दर्शनत्वेन योजनीयम्, यत्र कबीरतुलसीदासादीनामपि रामानन्दविनेयानां मतमन्तर्गर्भं स्यात्। नात्र सन्देहलेशो यदस्य पारम्परिकस्याभिमतस्य दर्शनत्वेन प्रकाशने मोक्षमीमांसाया लेखका आचार्यपादा एव प्रमाणभूताः समर्थाश्च सन्ति। आचार्यपादेषु नव्यप्राचीनव्याकरणयोः, नव्यप्राचीनन्याययोः, शैववैष्णवादिसकलवेदान्तानां सांख्ययोगतन्त्रशास्त्राणां च तलस्पर्शि वैदुष्यं विराजते। न केवलमेतेषु विद्वत्त्वम्, चारित्र्यं तपश्चापि तदनुरूपमेव सप्रकर्षं निष्ठितम्। एतेषां

तपःपूतं विद्वत्त्वं पुरातनानां विद्याचरणसम्पन्नानां विदुषां पवित्रतमं जीवनं स्मारयति। किन्तु एतेषां जनसंसदि अत्यन्तं विरागः स्वैनैव स्वगोपनप्रकारः लोककल्याणाय नितरां विघ्नभूत इति सखेदं मन्ये। अत एव निरन्तरं चत्वारिंशद्वर्षपर्यन्तं काश्यामेव वसतामेतेषां लाभः परिचयो वा कतिपयैरेव छात्रैर्विद्वद्भिश्च लब्धः। मोक्षमीमांसाऽभिधेयोऽयं निबन्धोऽपि केषांचिदन्तेवसतां विनेयानां कृते लिखितः, यः आचार्यपादानां सेवकानां शिष्याणां च स्वामिरामानन्दाचार्याणां (राजेन्द्रापरनाम्नाम्) प्रयासहठेन प्रकाश्यते। इदानीमाचार्यपादाः सुस्वस्थाः प्रायः पञ्चाशीत्यधिकवर्षे वयसि आयुःसंस्कारं वहन्ति। इदानीं मया तेषां लेखनादिविषये किं वक्तव्यम्। तथापि लोककल्याणमनुरुध्य ग्रन्थलेखनप्रार्थने न दोषं संभावयामि। अन्ते स्ववचः—प्रागल्भ्यमुपसंहरन् क्षमां च याचमानो विरमामि।

अनन्तचतुर्दशी
दि० १४–९–१९७०

जगन्नाथ उपाध्यायः
पालिविभागाध्यक्षः
वाराणसेय–संस्कृत–विश्वविद्यालयः, वाराणसी।



स्वामी रामलक्ष्मणाचार्यः
दार्शनिकसार्वभौमेश–लब्धस्वर्णपदक,
व्याकरण–न्याय–वेदान्त–मीमांसा–साहित्याचार्य, सर्वदर्शन पोस्टाचार्य

॥ श्रीमते रामानन्दाय नमः ॥

॥ श्रीसीतारामाभ्यां नमः ॥

॥ श्रीमते हनुमते नमः ॥

# लेखकस्य किंचित् वक्तव्यम्

तत्रभवद्भिः श्रीमद्भिः विद्वदग्रेसरैः नहि इदं किंचिदविदितमस्ति यत् सर्वमतसिद्धं सर्वशास्त्रमान्यं च पुरुषार्थचतुष्टयमेव मानवानां कृते अनुमोदित समर्थितं चाप्यस्ति। तत्र पुरुषार्थचतुष्टय-मध्ये मोक्षः एव परमपुरुषार्थः। 'न स पुनरावर्तते' इत्यादि श्रुत्या यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्यादि स्मृत्या च तस्य मोक्षस्य नित्यत्वावधारणात्। इतरेषां धमार्थकामानां त्रयाणां पुरुषार्थानां तु प्रत्यक्षेण प्रमाणेन "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादि श्रुत्या च अनित्यत्वाव-गमाच्च। तत्र हि भिन्नभिन्नाचार्याणां मतेन मोक्षस्वरूपं किम्? किं च मोक्षसाधनम्? इत्यादिकं विषयमवलम्ब्य अस्मिन् मोक्ष-मीमांसानाम्नि ग्रन्थे लघुरूपेण विवेचनं कृतमस्ति। येन सामान्य-बोधवतामपि जिज्ञासूनां सुगमतया एतद्विषयकबोधो भवेत्। ज्ञानगाम्भीर्यावगाहनपराणां मानवानां कृते तु सन्त्येव प्राचीनाचार्य-कृता बहवो निबन्धाः पूर्वोक्तविषयकाः। तैरेव निबन्धैः तेषां हृदयतोषः सुकरः। एतत् सर्वं निश्चित्यैव मदीयोऽयं प्रयासः बालबोधार्थो यथा भवेत् तथैव व्याप्रियते मया।

अत एव अत्र ग्रन्थे तत्र तत्र स्थलविशेषे सूक्ष्मरूपेणैव नास्तिक-दर्शनरीत्या आस्तिकदर्शनरीत्या च मोक्षस्वरूपं तत्साधनादिकं च सप्रमाणं निरूपितमस्ति। प्रसंगाच्च सर्वेषां श्रुतिस्मृतिपुराणादि-शास्त्राणां साक्षात् परम्परया वा भगवति अवतार्यवतारात्मकोभय-स्वरूपे ब्रह्मणि सर्वरमणकारिणि ससीते परात्परतरतत्वात्मके श्रीरामे एव तात्पर्यं विद्यते इति कृत्वैव तेषां सर्वेषां शास्त्राणां प्रस्थानभेदाः तत्स्वरूपाणि च सूक्ष्मतया निरूप्यन्ते। तथाहि याज्ञवल्क्यः।

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ॥
तथैव व्यासोऽपि ।
अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्याह्येताश्चतुर्दश ॥
आयुर्वेदो, धनुर्वेदो, गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं तुरीयं च विद्याह्यष्टादश स्मृताः ॥ इत्याह ॥

तत्र तेषां श्लोकानां तु तात्पर्यमित्थम् :—

पुराणमेकं प्रस्थानं, तत्रैव उपपुराणस्यापि अन्तर्भावः । अत्रहि पुराणपदेन ब्राह्मम्, पाद्मम्, वैष्णवम्, शैवम्, भागवतम्, नारदीयम्, मार्कण्डेयम्, आग्नेयम्, भविष्यम्, ब्रह्मवैवर्त्तम्, लैंगम्, वाराहम्, स्कान्दम्, वामनम, कौर्मम्, मात्स्यम्, गारुडम्, ब्रह्माण्डञ्च इत्यष्टादश सद्ग्रन्थाः गृह्यन्ते ।

तथाहि उपपुराणशब्देनाऽपि :—

सनत्कुमारप्रोक्तं एकम् द्वितीयं नारसिंहम् एवं क्रमेण नान्दम् शिवधर्माख्यम् । दौर्वाससम्, नारदीयम्, कापिलम्, मानवम्, औशनसम्, ब्रह्माण्डम्, वारुणम्, कालीपुराणाख्यम्, वाशिष्ठम्, लैंगाख्यम्, माहेश्वरम्, साम्बपुराणाख्यम्, सौरम्, पाराशरम्, मारीचाख्यम्, भार्गवमादि नानाविधानि उपपुराणानि अनेकप्रकाराणि द्रष्टव्यानि ।

न्यायपदेन गौतमप्रणीता पंचाध्यायी आन्विक्षिकी विद्या ग्राह्या । तथैव कणादप्रणीतं दशाध्यायात्मकम् वैशेषिकं शास्त्रमपि न्यायपदेन ग्राह्यमेव ।

मीमांसापदेनापि कर्ममीमांसा ब्रह्ममीमांसा च इति द्वयोरेव ग्रहणम् । धर्मशास्त्रपदेन मनु, याज्ञवल्क्य, विष्णु, यमाङ्गिरोवशिष्ठादिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि शास्त्राणि स्वीक्रियन्ते ।

एवमेव व्यासकृतं महाभारतं वाल्मीकिमहर्षिकृतं रामायणमेतद् द्वयं चापि धर्म-शास्त्रे एव अंतर्भूतं स्वयमेव इतिहासत्वेन प्रसिद्धं च। सांख्यादीनां दर्शनानाञ्च धर्म-शास्त्रान्तर्भावेपि इह स्वशब्देनैव निर्देशात् पृथग् एव संगतिर्वाच्या।

अंगशब्देन हि शिक्षा, व्याकरणम्, ज्योतिषम्, निरुक्तम्, छन्दः, कल्पसूत्रञ्च इति षड् विधानि शास्त्राणि गृह्यन्ते।

वेदपदेन ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति चत्वारो वेदाः विवक्षिताः।

चतुर्णां वेदानां क्रमेण चत्वारः उपवेदाः अपि सन्ति :—

यथा-प्रथमः आयुर्वेदः, तस्य अष्टौ स्थानानि भवन्ति। सूत्रं, शारीरं, ऐन्द्रियं, चिकित्सा, निदानं, विमानं, विकल्पः सिद्धिश्चेति।

द्वितीयः धनुर्वेदः, सच पादचतुष्टयात्मको विश्वामित्रप्रणीतः। तत्र प्रथमः पादः दीक्षापादः, द्वितीयः संग्रहपादः, तृतीयः सिद्धिपादः, चतुर्थः प्रयोगपादश्चेति।

तृतीयः उपवेदो गान्धर्ववेदो भगवता भरतेन प्रणीतः स च गीतवाद्यनृत्यभेदेन बहुविधः।

एवं चतुर्थं अर्थशास्त्रमपि बहुविधम्। नीतिशास्त्रं, अश्वशास्त्रं, सूपशास्त्रं चतुःषष्ठिकलाशास्त्रं चेति। एतत् सर्वं नानामुनिभिः प्रणीतम्। तथैव सांख्यशास्त्रं भगवता कपिलेन प्रणीतम्। योगशास्त्रं भगवता पतंजलिना प्रणीतम। पाशुपतशास्त्रं पशुपतिना विरचितं पंचाध्यायात्मकम्। एवं नारदादिभिः कृतं वैष्णवं पांचरात्रमिति संक्षेपेण तत्स्वरूपविवेचनपुरःसराः प्रस्थानभेदाः विवेचिता आसन्। पूर्वोक्तानां सर्वेषामेव प्रस्थानानां संक्षिप्ततया त्रिविधे एव प्रस्थानभेदे अन्तर्भावो भवतीति निश्चीयते मनीषिभिः। तत्र प्रथमः प्रस्थानभेदः आरंभवादः एकः, परिणामवादो द्वितीयः, विवर्तवादश्च तृतीयः। अत्रैव अन्यसर्ववादानां साक्षात् परम्परया वान्तर्भावः सुशकः।

अत्र विभिन्नास्तिकनास्तिकप्रस्थानेषु वेदादारभ्य पुराण-स्मृत्याद्यन्तं गुम्फितं अध्यात्मतत्त्वं तर्कागमयुक्त्यादिसंवलितं गहनं दृश्यते। अतोऽत्र केवलं मोक्षविषये एव दर्शनप्रस्थानान्यालोचनीयानि भवन्ति। इति प्रस्थानभेदनिरूपणम्।

ततश्च साम्प्रदायिकरहस्यं निरूप्यते तथाहि—वैदिकानामपि अध्यात्मवादिनाम् राद्धान्ते ज्ञानपुरःसरं ब्रह्मचिन्तनविषयमादाय बहवोवादाः, आनादिकालतः प्रचलिताः आसन्। यथा "अद्वैतवादः, द्वैतवादः, द्वैताऽद्वैतवादः, शुद्धाऽद्वैतवादः, अचिन्त्यद्वैताद्वैतवादः, विशिष्टाऽद्वैतवादः, शुद्धविशिष्टाऽद्वैतवादश्च" इत्यादिरूपेणनानावादाः सन्ति। तत्र शुद्धविशिष्टाऽद्वैतवादपदम् तु तस्यैव सम्प्रदायस्य बोधकम् यस्य सम्प्रदायस्य सर्वप्रथमः उपदेष्टा परात्परतरतत्त्वस्वरूपः ससीताः श्रीरामः एव आसीत्। तस्यैव अनादिसिद्धसम्प्रदायस्य प्रचारकः प्रसारकश्च यतिवरः सार्वभौमेशः आचार्यः स्वनामधन्यः श्रीरामानन्दाचार्यपादः एव आसीत्। तस्याचार्यवरस्यावतारादिविषयमवलम्ब्य नानाऽऽर्षग्रन्थेषु श्री रामावतारत्वेनैव निर्धारणं विद्यते। यथा "रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले। कलौ लोके मुनिर्जातः सर्वजीवदयापरः। तप्तकांचनसंकाशो रामानन्दः स्वयंहरिः।" वैश्वानरसंहितायाम्—

श्रीमद्विक्रमवत्सरेऽश्वरसवारीशेन्दुसंख्ये धराम्।
त्यक्त्वा माधवमासके सुदि तृतीयायां तिथावुज्ज्वलम्॥
(१४६७ वि. सं.)
धर्मं भागवतं विमुक्तिफलकं विन्यस्य जीवेषु वै।
रामानन्दसुदेशिकस्समगमत् साकेतलोकं परम्॥
इति अगस्त्यसंहितायाम् च।

एतदवतारकारणं तु इदमेव यत् दक्षिणदेशीयवैदिकब्राह्मण-कुलोत्पन्नाः शंकराचार्यप्रभृतयः आचार्याः ज्ञानपुरःसरं ब्रह्मचिन्तन-प्रकारमादाय निर्विशेषब्रह्मणः सविशेषब्रह्मणश्च चिन्तनप्रकारान्

बहुविधान् प्रतिपादितवन्तः तथापि दक्षिणभारते उत्तरभारते वा परात्परतरतत्त्वात्मकस्य ससीतस्य श्रीरामस्य गुह्याद्गुह्यतरं गुह्यतमं चापि चिन्तनं प्रायेण अप्रसारितमप्रचारितमेवासीत्, एतन्न्यूनत्व-दोषपरिहारार्थमेव उत्तरभारतभूमौ पवित्रतमतीर्थे श्रीतीर्थराजप्रयागे अतिपरमसदाचारनिष्ठसर्वोत्कृष्टवैदिकोपासकब्राह्मणकुलं स्वजन्मना विभूष्य श्री रामानन्दनाम्नाऽन्वर्थः श्रीरामः एव आविर्भूतः। अस्य परमाचार्यस्याविर्भावात् पूर्वमेव श्रीलक्ष्मणावतारः ( श्रीशेषा-वतारो वा ) स्वनामधन्यः श्री रामानुजाचार्यः अस्यां भारतभूमौ अवतीर्य सविशेषब्रह्मणः "नमोस्तु वासुदेवाय, ज्योतिषां पतये नमः। नमोस्तु रामदेवाय जगदानन्ददायिने॥" इत्यादिरूपेणार्ष-संहितादिवचनेन प्रतिपादितस्यापि श्रीरामस्य स्वरूपं परमगोप-नीयत्वेन हृदि संगोप्य बहिः परपदेन चतुर्भुजस्य श्रीनारायणस्यैव प्रतिपादनम् विधाय कृतकृत्यतामगच्छत्। ततश्च व्यूहशब्देन वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्याः चत्वारः एव विग्रहाः गृहीता आसन्। विभवशब्देनावताररूपा श्रीरामकृष्णादय एव प्रतिपादिताः नतु अवतारिस्वरूपाः श्रीरामादयः। अर्चावतारशब्देन हि श्रीमद्वेंकटनाथादयः श्रीशालिग्रामादयश्चापि हि गृहीताः। तथैव चान्तर्यामिपदेन सर्वहृदयवासी नियामकः परमात्मैव स्थापितः आसीत्। इत्युक्तप्रकारेण परमात्मनः पञ्चविधं रूपमेव प्रतिपादितम् श्रीस्वामिना रामानुजाचार्येण।

त्रिपादविभूतौ पादत्रयात्मिकायाम् दिव्यलीलाभूमौ प्रथमपादा-ख्यात् श्रीनारायणप्रभुलीलास्थानात् परपादात् उपरि उपरि भागे स्थितस्य द्वितीयपादस्य परात्परलोकस्य श्रीकृष्णधाम्नो गोलोकस्य तथैव च तृतीयपादाख्यस्य परात्परतरलोकस्य नित्यलीलास्थलविशेषस्य नित्यसाकेतलोकस्य रामधाम्नश्चापि चर्चा नहि कृता स्वामिना श्रीरामानुजाचार्येण। तत्र हि कारणं यत् परात्परतरप्रभोः श्रीरामस्य अवतारस्वरूपेण श्रीमदाचार्यवर्येण श्रीमद्रामानन्दाचार्येणैवार्थतः

शब्दतश्च परात्परस्यपरात्परतरस्य च विग्रहस्य धाम्नो वा करिष्यमाणा चर्चा जिज्ञासुभिः जनैः सुग्राह्या भविष्यति इत्याद्यभिप्राय एव प्रधानम्।

अत एव श्रीरामानन्दाचार्यकृतनिबन्धेषु तदनुयायिकृतनिबन्धेषु च यत्र तत्र स्थलविशेषे क्वचित् गुह्यरूपेण क्वचित् प्रस्फुटरूपेण च परात्परतरलोकस्य परात्परतरविग्रहस्य च वर्णनमुपलभ्यते। तस्मादेव हेतोः अयं सम्प्रादयः शुद्धविशिष्टाऽद्वैतसम्प्रदायशब्देन व्यवह्रियते। श्रीरामानन्दसम्प्रदायरहस्यमर्मज्ञैर्मनीषिभिः। तथैव चैतत्सम्प्रदायानुयायिनः वैष्णवाः अपि श्रीरामानन्दीयवैष्णवपदेन श्रीसदाचारि वैष्णवपदेन वा व्याहृताः भवन्ति सर्वत्र धार्मिकभूमौ तथाध्यात्मिक भूमौ च। एतस्यैवाचार्यसार्वभौमेशस्य परमवैदिकसिद्धान्ते ब्रह्मणो भगवतः परमात्मनः परात्परतररूपं, परात्पररूपं, पररूपं, व्यूहरूपं, विभवरूपं, अर्चावताररूपं, अन्तर्यामिरूपञ्चेति विभागेन सप्तविधमेव रूपं तत्त्वतः नतु पञ्चविधमेवेति सुधियो विभावयन्तु इति साम्प्रदायिकरहस्यम्।

अस्मिन् कर्मणि मम शिष्येण श्रीरामानन्दाचार्येण ( राजेन्द्रापरनाम्नापिप्रसिद्धेन ) महान् उद्यमः कृतः। तेषामुद्यमवशादयं निबन्धः प्राकाश्यमाप्तवान्। एतत्पुण्यवशात् तस्य कल्याणं स्यादिति भगवन्तं ससीतं श्रीरामं प्रति बहुविधाः मदीयाः प्रार्थना इत्यलम्।

अस्मिंश्च मोक्षमीमांसानाम्नि ग्रन्थे लेखकस्य अक्षरसंयोजकस्य संशोधकस्य च नानाविधदोषवशात् यत्र तत्र बह्व्यः त्रुटयः संजाताः ताः सहृदयैः मनीषिभिः उपेक्ष्य अस्य ग्रन्थस्य अध्ययनं मननादिकं च विधाय अस्य लेखकस्य मनोरथेन सह परिश्रमोपि सफलो यथा भवेत् तथैवानुग्रहः कर्तव्यः यतो हि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

इति प्राचीनोक्त्या प्रार्थी श्रीमतां विनीतः—

—स्वामी रामलक्ष्मणाचार्यः

# विषय-सूची

## ( संस्कृत हिन्दी )

॥ श्रीसीतारामाभ्यां नमः ॥

# मोक्षमीमांसा

श्रीमते रामानन्दाय नमः

हरिनारायणं पूज्यं शास्त्रैकाब्धि त्रिपाठिनम् ।
सूर्यनारायणं शुक्लं व्याकरणादिवारिधिम् ॥१॥
श्रीगोपीनाथशर्माणं कविराजं बुधं वरम् ।
महामहादिकं दान्तमुपाध्यायान्तमिष्टदम् ॥२॥
सर्वदर्शनहर्यक्षं श्रीवामाचरणं परम् ।
भट्टाचार्यं च संस्तुत्यं नत्वा चैवं सतांवरम् ॥३॥
यतीन्द्रं परमं नित्यं हिन्दूधर्मविशोधकम् ।
रामानन्दाख्यमाचार्यं ध्यायं ध्यायं सुभक्तिदम् ॥४॥
श्रीनृसिंहाख्यमाचार्यं सद्गुरुं रामतत्त्वदम् ।
प्रणम्य पितरौ देवौ रामं च सीतया समम् ॥५॥
परात्परतरं तत्त्वं ध्यात्वा नत्वा च सन्मुदे ।
दर्शने मोक्षमीमांसा शास्त्रयुक्त्या विविच्यते ॥६॥
रामलक्ष्मणनाम्ना वै मयाऽऽचार्येण सम्मतान् ।
नानाग्रन्थान् समालोक्य स्याद्रामोऽनेन भक्तिदः ॥७॥

# अथ भारतीयदर्शनेषु मोक्षस्वरूपम्

तत्र खलु मोक्षविवेचनप्रसंगे—'के तावन्मोक्षाभिलाषिणो नाम मुमुक्षवो जीवाः? इति जिज्ञासायां पूर्वं जीवभेदनिरूपणमेवावश्यकम्। तथाहि—जीवो नाम बद्ध-मुक्त-नित्यभेदात् त्रिविधः। तत्र बद्धा जीवा अनिवृत्तसंसाराश्चतुर्दशभुवनात्मकाण्डकटाहवर्तिनो ब्रह्मादिकीटपर्यन्ताश्चेतनविशेषा एव। ते पुनर्द्विविधाः—शास्त्रवश्याः शास्त्रावश्याश्चेति। तेषु शास्त्रवश्याः करणायत्तज्ञाना बद्धा देवमनुष्यादयः, शास्त्रावश्याश्च तिर्यक्स्थावरादयो जीवविशेषा इति। शास्त्रवश्येष्वपि बुभुक्षु-मुमुक्षुभेदाद् द्वैविध्यम्। तत्र बुभुक्षवस्त्रैवर्गिकपुरुषार्थपरायणा जीवाः। तेऽपि पुनर्द्विविधाः—अर्थकामपराः, धर्मपराश्चेति। तत्र अर्थकाममात्रपरा देहात्माभिमानिनः, धर्मपराश्च "चोदनालक्षणोऽर्थो धर्मः", "वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः", "अलौकिकश्रेयःसाधनं धर्मः" इत्यादिलक्षणलक्षितयज्ञदानतपस्तीर्थयात्रादिनिष्ठा जीवाः। ते च धर्मपरा जीवा देहातिरिक्तस्यात्मनः परलोकोऽस्तीति ज्ञानवन्तः पुरुषविशेषा एवेति। मुमुक्षवश्चापि द्विविधा एव—कैवल्यपराः, मोक्षपराश्चेति।

इत्थं खलु भारतीयदर्शनरीत्या कैवल्यादिमोक्षस्वरूपविवेचनं तावदारभ्यते। तत्र हि भारतीयदर्शनानि खलु आस्तिकनास्तिकभेदभिन्नानि द्विविधान्येव। तेषु च ये हि मानवा वेदान् प्रमाणत्वेनाङ्गीकुर्वन्ति तेऽत्रास्तिकपदवाच्याः। तेषामेव च दर्शनानि आस्तिकदर्शनपदाभिधेयानि। ये तु तान् वेदान् प्रमाणत्वेन नाङ्गीकुर्वन्ति त एवेह नास्तिकपदप्रतिपाद्याः। तेषामेव च दर्शनान्यपि नास्तिकदर्शनपदव्यपदेश्यानि सन्तीति तात्पर्यमत्र वृद्धानाम्।

तत्र तावत् सूचीकटाहन्यायेन चार्वाकबौद्धादिनास्तिकदर्शनरीत्यैव मोक्षसाधनं मोक्षस्वरूपविवेचनञ्चारब्धव्यं स्यात्। तथाहि—

## १. चार्वाकदर्शने—

नास्तिकशिरोमणिना चार्वाकेण प्रतिपादितं दर्शनमेव चार्वाकदर्शनम्। तत्र च चार्वाकदर्शने येन केनापि प्रकारेण प्राप्तं शारीरिकं सुखमेव पुरुषार्थः। स एव मोक्षपदवाच्यश्च, न तु तदतिरिक्तं किमप्यन्यद् वस्तु मोक्षपदप्रतिपाद्यमस्ति। अथवा कण्टकादिजन्यं दुःखमेव नरकपदवाच्यम्। कान्तालिङ्गनादिजन्यं सुखमेव स्वर्गपदाभिधेयं पुरुषार्थपदार्थः। लोकसिद्धो राजैव परमेश्वरः, देहच्छेद एव मोक्षः, मरणमेव वा मोक्षः, तन्मते हि देहातिरिक्तस्यात्मनोऽसत्त्वात्, वेदेश्वराद्यभावाच्च।

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ॥
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

इति लोकगाथामनुसृत्य चार्वाकमतं लोकायतमतपदेनाप्युच्यत इति।

तथैव सुरगुरूणा सुरगुरुभिन्नेन केनचिद् बृहस्पतिनामकेन वा पुरुषेणाप्युक्तम्—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥
यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ इत्यादि।

इति चार्वाकदर्शनरीत्या संक्षेपेण मोक्षादि-
स्वरूपादिविवेचनम्।

## २. माध्यमिक-बौद्धदर्शने

बुद्धमनुसरन्तो बौद्धास्तेषां दर्शनं बौद्धदर्शनम्। ते च बौद्धा माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकनामभिश्चतुर्विधाः प्रसिद्धाः।

तेषु च भगवता बुद्धेन प्रथमतः स्वशिष्येभ्यः 'सर्वं शून्यम्' इत्युपदेशे कृते यैः शिष्यैस्तदेव ( सर्वं शून्यमित्येव ) तत्त्वं यथार्थत्वेन परिगृहीतम्, न तु तस्योपरि कोऽप्याक्षेपः कृतः, ते मध्यमबुद्धित्वान्माध्यमिका इति शब्देन व्यवहृताः। तेषां मते "सर्वं क्षणिकं क्षणिकम्, सर्वं दुःखं दुःखम्, सर्वं स्वलक्षणं स्वलक्षणम्, सर्वं शून्यं शून्यम्" इति भावनाचतुष्टयवशाद् निखिलवासनानिवृत्तौ पर- ( परम ) निर्वाणं शून्यरूपम् । तदेव मोक्षपदार्थः ।

इति माध्यमिकबौद्धदर्शनरीत्या संक्षेपेण
मोक्षादिस्वरूपविवेचनम् ।

## ३. योगाचार-बौद्धदर्शने—

ततश्च शिष्येण हि द्वयं करणीयम्—योग आचारश्चेति। तत्राज्ञातार्थस्य ज्ञानायाक्षेपो योगः, गुरूक्तार्थस्याङ्गीकरणमाचार इति। तत्र हि यैः शिष्यैर्गुरूक्तभावनाचतुष्टयं बाह्यार्थशून्यत्वञ्चाङ्गीकृत्य सर्वस्य शून्यत्वे आक्षेपः कृतस्ते योगाचारपदेन प्रसिद्धिंगताः। अत एते बाह्यार्थशून्यत्ववादिनो विज्ञानमात्रास्तित्ववादिनश्चोच्यन्ते ।

तेषां (क्षणिक) विज्ञानवादियोगाचाराणां मते ह्यनादिवासनावशाद् बुद्धिरेवानेकाकारेण भासते इति प्रागुक्तगुरूपदिष्टभावनाचतुष्टयपरिचयबलाद् सर्वविधवासनोच्छेदे सति विविधविषयाकारोपद्रवानुदयाद् विशुद्धज्ञानोदय एव मोक्ष इति ।

इति योगाचारबौद्धदर्शनरीत्या संक्षेपेण
मोक्षादिस्वरूपविवेचनम् ।

## ४. सौत्रान्तिक-बौद्धदर्शने—

अन्ये पुनर्नीलादेर्बाह्यार्थस्यासत्त्वे विज्ञानमात्रास्तित्वं वक्तुं न शक्यम्। ततोऽङ्गीकरणीय एव बाह्यार्थोऽपीत्याहुः। ततश्च गुरुणा बुद्धेन 'भवतु नाम बाह्यार्थः, किन्तु स न प्रत्यक्षविषयः, अपि तु अनुमिति-

विषय एव' इत्युक्ते कियत्पर्यन्तं सूत्रं भवेदिति पृष्टवत्वात् ते सौत्रान्तिकसंज्ञया प्रसिद्धा जाताः। सूत्रान्तं पृच्छन्ति ये ते सौत्रान्तिका इति यावत्। ते एव हि बाह्यार्थानुमेयत्ववादिनोऽप्युच्यन्ते। तेषां नये हि तदुभयं (बाह्यमान्तरञ्च) यत् तस्य निरोध एव मोक्षः, तन्निरोधानन्तरं विमलज्ञानोदय एव वा मोक्षपदार्थ इति। तन्निरोधोपायो मार्गः, स च तत्त्वज्ञानात्मक एव; तच्च तत्त्वज्ञानं प्राचीनभावनाबलाद्भवतीति दिक्।

इति सौत्रान्तिकबौद्धदर्शनरीत्या संक्षेपेण
मोक्षादिस्वरूपविवेचनम्।

## ५. वैभाषिक-बौद्धदर्शने—

केचन हि बौद्धा इत्थमूचुः—'यथा चानुभवबलाद् बाह्यार्थो घटपटादिरङ्गीक्रियते तथा प्रत्यक्षबलात्तस्य घटपटादिरूपार्थस्य प्रत्यक्षत्वमप्यङ्गीकरणीयमेव। एवञ्च बाह्येषु आन्तरेषु चार्थेषु प्रत्यक्षेषु सत्सु, कांश्चित् शिष्यान् प्रति प्रथमं सर्वं शून्यमिति यदुपदिष्टवान् गुरुः, तदनन्तरञ्च कांश्चित् शिष्यान् प्रति विज्ञानमेव सदित्युक्तवान्, ततश्च कांश्चन शिष्यान् प्रति बाह्यमान्तरञ्चेत्युभयं सदित्यभिप्रेत्यावस्थितान् शिष्यान् प्रति विज्ञेयमनुमेयञ्चेति गुरुरुक्तवान्। सा चेयं गुरोर्विरुद्धा भाषेति ब्रुवाणाः शिष्या वैभाषिकाख्यया प्रसिद्धिं प्राप्ता बौद्धाः सन्ति। अत एत एव हि बाह्यार्थप्रत्यक्षत्ववादिनः सर्वास्तित्ववादिनश्चोच्यन्ते।

तेषां सिद्धान्ते च दुःखतत्कारणैतदुभयनिवृत्त्युपायः 'सर्वं क्षणिकम्' इति भावनाख्यो मार्गः, सर्वनैरात्म्यवासनारूपो निरोधो हि मोक्षपदाभिधेयश्चेति। तथैव भणितं विवेकविलासे आचार्यपादैः—

क्षणिका सर्वसंस्कारा इति या वासना स्थिरा।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते॥

रागादिज्ञानसन्तानवासनोच्छेदसंभवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ इति ।
( वि० वि० ८।२७०-२७४ )

इति वैभाषिकदर्शनरीत्या संक्षेपेण मोक्षादिस्वरूपविवेचनम् ।

इति बौद्धमते मोक्षादिस्वरूपविवेचनं समाप्तम् ।

## ६. आर्हतदर्शने—

अर्हन्तं परमेश्वरं मन्यमाना ये ते आर्हताः, तेषां दर्शनं ह्यार्हतदर्शनपदवाच्यम् । एतेषां राद्धान्ते खलु सम्यग्दर्शन-सम्यग्ज्ञान-सम्यक्चारित्रैश्च मोक्षः सिद्ध्यति । स च मोक्षो देहस्वरूपावरणापगमे जीवस्य सततोर्ध्वगमनस्वरूप एवेति ।

अथवा मिथ्यादर्शनादीनां बन्धहेतूनां निरोधे सत्यभिनवकर्माभावान्निर्जराहेतुसन्निधाने नार्जितस्य कर्मणो निरसनादात्यन्तिककर्ममोक्षणमेव मोक्षः । तदुक्तम्—'बन्धहेत्वभावहेतुनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्षः' इति ( तत्त्वार्थसू० १०।२ ), 'तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात्' ( तत्त्वार्थसू० १०।५ ) इति च । यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रं ह्युपरतेऽपि तस्मिन् तद्बलादेवाऽऽसंस्कारक्षयं भ्रमति, तथैव भवस्थेनात्मनाऽपवर्गप्राप्तये बहुशो यत्कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यत एव । यथा वा मृत्तिकालेपकृतगौरवमलांबुद्रव्यं जलेऽधः पतति, पुनरपेतमृत्तिकाबन्धमूर्ध्वं गच्छति, तथैव हि कर्मरहित आत्मा असङ्गत्वादूर्ध्वं गच्छतीति सर्वं समञ्जसम् ।

तथैवाभियुक्तैरप्युक्तम्—

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते त्वालोकाकाशमागताः ॥ इति ।

अन्ये तु केचन सौगताः—'गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरि देशावस्थानमेव मुक्तिः' इति स्वीकुर्वन्तीति दिक् ।

इति आर्हतदर्शनरीत्या मोक्षस्वरूपविवेचननं
समासेन समाप्तम् ।

तत्र वेदविरोधित्वादेव चार्वाकप्रभृति-आर्हतपर्यन्ताः षड् दार्शनिका नास्तिका इत्युच्यन्ते। तत्र हि वेदविरोधित्वमेव नास्तिकत्वमिति भावः।

तेषां मध्ये यत्प्राथमिकं नास्तिकाग्रगण्यचार्वाकदर्शनं तत्रैव जडवादि-डार्विन-कार्लमार्क्सप्रभृतिपाश्चात्त्यदेशीयमनीषिप्रसारितसिद्धान्तानामप्यन्तर्भावः, अतोऽत्र तत्तन्मतानुमोदितसिद्धान्तसमर्थितं यन्मोक्षस्वरूपम्, यच्च तद्विवेचनादिकम्, तत्पार्थक्येन न प्रदर्शितम्; तेषां दर्शनानामपि 'कामोपभोगपरमाः' इत्यासुरसिद्धान्तप्रतिपादकत्वाच्चार्वाकदर्शनाऽभिन्नत्वाच्चेति यावत् ।

इति डार्विन-कार्लमार्क्सप्रभृतिपाश्चत्त्यदर्शनरीत्या
समासेन मोक्षस्वरूपविवेचनं समाप्तम् ।

## १. आस्तिकदर्शनेषु प्राथमिके नकुलीशपाशुपतदर्शने—

सम्प्रति आस्तिकदर्शनानां मध्ये नकुलीशपाशुपतदर्शनसिद्धान्ते तावत् 'दुःखनिरासपूर्वकमीश्वरभावो हि दुःखान्तशब्देनोक्तः स एव परमपुरुषार्थो मोक्षः' इति, 'आत्यन्तिकदुःखनिवृत्तिरूपो वा मोक्षः' इति, 'पारमैश्वर्यप्राप्तिरूपो वा मोक्षः' इति च नानाविधशब्देन मोक्षस्वरूपं विवेचितम्। तत्र दृक्शक्ति-क्रियाशक्तिद्वयरूपमेव पारमैश्वर्यम्, दृक्शक्तिः सर्वज्ञता, क्रियाशक्तिश्च इच्छितपदार्थप्राप्तिरूपा इति दिक् ।

इति नकुलीशपाशुपतदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम् ।

## २. शिवाऽद्वैतदर्शने—

कर्मज्ञानसमुच्चयेन जीवस्य शिवसमानगुणत्वरूपो मोक्ष एव परमपुरुषार्थः। अथवा कर्मणा ब्रह्मविद्यया उपासनया वा शिवत्वप्राप्तिरूप एव मोक्षः परमपुरुषार्थपदशक्य इति।

इति शिवाऽद्वैतदर्शनरीत्या मोक्षस्वरूपादि-
विवेचनं समासेन समाप्तम्।

## ३. शैवदर्शने—

शिवस्य परमेश्वरस्येमे वयं सर्वे जीवा इति मन्यमानाः पुरुषविशेषाः शैवाः, तेषां राद्धान्ते खलु—

पतिविद्ये तथाऽविद्या पशुः पाशश्च कारणम्।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः॥

इति कारिकोक्तानां षण्णां तत्त्वानां सामीचीन्येन ज्ञानात् पाशविमोचने संजाते सति 'शिवत्वप्राप्तिरूपो हि मोक्षः' इति मोक्षस्वरूपविवेचनं सिद्ध्यति।

इति शैवदर्शनरीत्या मोक्षस्वरूपविवेचनं
संक्षेपेण समाप्तम्।

## ४. प्रत्यभिज्ञादर्शने—

काश्मीरदेशीयाभिनवगुप्ताचार्यप्रसारितशैवदर्शनमेव प्रत्यभिज्ञादर्शनपदेन विवक्षितम्। तत्र च मोक्षप्राप्तौ प्रत्यभिज्ञैव मुख्यसाधनमिति मन्यमानाः माहेश्वरा एव प्रत्यभिज्ञादर्शनसिद्धान्तानुयायिनः। तेषां मते हि परिपूर्णचैतन्यस्वरूपेण जीवात्मस्वरूपप्रकाशनार्थं खलु प्रत्यभिज्ञैव ( अहमीश्वर एव, न तद्भिन्न इत्याकारकसाक्षात्काररूपा ) आवश्यकीति पूर्णतालाभ एव मोक्ष इति प्रत्यभिज्ञादर्शनानुसारिणां मतमिति भावः। अथवा सर्वज्ञत्वसर्वकर्तृत्वरूपमाहेश्वरत्व-

प्राप्तिरेव मुक्तिः। तत्साधनञ्च प्रत्यभिज्ञैव ( जीवेश्वरयोरैक्यज्ञानमेव ) इति दिक्। सोमानन्दपादैरपि तथैवोक्तम्—

सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना।
तदैक्येन विना नास्ति संविदां लोकपद्धतिः॥ इत्यादि।

इति प्रत्यभिज्ञादर्शनरीत्या मोक्षस्वरूप-
विवेचनं संक्षेपेण समाप्तम्।

## ५. पाशुपतदर्शने—

प्रलयाकलकोटिस्थस्य जीवस्य पाश( मलपाशकर्मपाशेति ) द्वय-पक्वावस्थैव मोक्षः। तत्र 'अपवित्रता मलपाशः' 'धर्माधर्मोभयात्मकः कर्मपाशश्च' इति।

इति पाशुपतदर्शनरीत्या मोक्षस्वरूप-
विवेचनम् समाप्तम्।

## ६. रसेश्वरदर्शने—

पारदादिपदवाच्यो यो रसस्तद्रूप एवेश्वरः। अतः स एव रसेश्वर इत्युच्यते। सोऽयं सेव्यमानो रसेश्वरः शरीरदार्ढ्यसम्पादनद्वारा मोक्षस्य हेतुर्भवतीति मन्यमाना माहेश्वरा एव रसेश्वरशब्दाभिधेया भवन्ति, तैः प्रवर्तितं दर्शनं रसेश्वरदर्शनमित्यभिधीयते। तेषां मते खलु—पारदरससेवनेन शरीरस्थैर्यसम्पादनाज्जीवन्मुक्तिरेव मोक्षः, जीवतः सत एव मुक्तिर्जीवन्मुक्तिः। सा च मुक्तिर्मूलाज्ञान-निवृत्तिपूर्वकस्वस्वरूपयाथात्म्यावाप्तिरूपा ज्ञानैकसाधनसाध्या च, 'तमेव विदित्वा' इत्यादिश्रुतेः, 'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्' इत्यादिस्मृतेश्च। तच्च ज्ञानं तदभ्यासातिशयात्। अभ्यासाति-शयश्च शरीरस्थैर्ये सत्येव भवति। तदुक्तं श्रीमद्भगवद्गोविन्द-पादाचार्यैः—

इति धनशरीरभोगान् मत्वाऽनित्यान् सदैव यतनीयम् ।
मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे ॥

इति कारिकया ।

रसार्णवेऽप्येवमेवोक्तम्—

पारदो गदितो यस्मात् परार्थं साधकोत्तमैः ।
सुप्तोऽयं मत्समो देवि मम प्रत्यङ्गसंभवः ॥
मम देहरसो यस्माद् रसस्तेनायमुच्यते ॥ इति ।
षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने ।
करामलकवत्सापि प्रत्यक्षा नोपलभ्यते ॥
तस्मात्तं रक्षयेत् पिण्डं रसैश्चैव रसायनैः ॥ इति च ।

रसस्य पारदत्वञ्च संसारपरपारप्रापणहेतुत्वेन । तथैवोक्तम्—

संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः ॥ इति ॥

तथा च पारदस्य मोक्षार्थत्वं तु न साक्षात्, किन्तु मुक्तिप्रयोजकज्ञानसम्पादकात्मतत्त्वाभ्याससाधनशरीरदार्ढ्यसम्पादनद्वारैवेति तदाशयः। एवञ्च जीवन्मुक्तिं समीहमानेन पुरुषप्रधानेनादौ पारदरससेवनेन शरीरस्थायित्वं सम्पादनीयम्। सम्पादिते च शरीरस्थैर्ये क्रमेणात्मतत्त्वाभ्यासातिशयाद् मिथ्याज्ञाननिवृत्तौ जायमानायां या मुक्तिः सा जीवत एव मुक्तिर्जीवन्मुक्तिरिति तात्पर्यम्। इति ।

इति रसेश्वरदर्शनरीत्या मोक्षस्वरूपविवेचनं समाप्तम् ।

७. वीरशैवदर्शने, अथवा शक्तिविशिष्टाद्वैतदर्शने—

लिङ्गाङ्गसामरस्य विचारे हि—

स्थीयते लीयते यत्र जगदेतच्चराचरम् ।
तद्ब्रह्मस्थलमित्युक्तं स्थलतत्त्वविशारदैः ॥

इत्यभियुक्तोक्तरीत्या स्थलस्वरूपः परब्रह्माभिन्नः शिव एव अङ्गस्थल-लिङ्गस्थलभेदाद् द्विविधः। तत्राङ्गस्थलस्यावान्तरभेदाः चतुश्चत्वारिंशत्परिमिताः, लिङ्गस्थलस्य च सप्तपञ्चाशत् परिमिता भेदाः। तत्र हि 'संकलितैकोत्तरशतस्थलात्मकलिङ्गाङ्गसामरस्य ( शिव-जीवैक्य )जन्यज्ञानेन शिवज्ञानविशिष्टो जीवो नामरूपविमुक्तः सन् परब्रह्माख्ये शिवे तत्त्वे सामरस्य( शिवजीवैक्य )प्राप्तिरूपं मोक्षं लभत इति वीरशैवानां मते शक्तिविशिष्टाऽद्वैतवादिनां मते वा मोक्षस्वरूपम्। तदुक्तं श्रीमज्जगद्गुरुरेणुकाचार्यैः—

जले जलमिव न्यस्तं वह्नौ वह्निरिवापितः।
परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते॥ इति॥

( सिद्धान्तशिखामणौ परि० २० )

इति वीरशैवदर्शनरीत्या अथवा शक्तिविशिष्टाद्वैतदर्शनरीत्या
मोक्षस्वरूपविवेचनं समाप्तम्।

८. शक्तिदर्शने—

जीवानामुद्धारकाः 'वेद-वैष्णव-शैव-दक्षिण-वाम-सिद्धान्त-कुला-भिधेयाः सप्त आचाराः'।

आराधनोपयोगिन्यः 'महाकाली-उग्रतारा-षोडशी-( त्रिपुरसुन्दरी) भुवनेश्वरी-छिन्नमस्ता-भैरवी-धूमावती-बगलामुखी-मातङ्गी–कमलाख्याः' दश महाविद्यारूपाः शक्तयः। तथैव आराध्यरूपाः परतत्त्वपदवाच्याः 'महाकाल-अक्षोभ्यपुरुष-पञ्चवक्त्ररुद्र-त्र्यम्बक-कबन्ध-दक्षिणामूर्ति-एक-वक्त्ररुद्र-मतङ्ग-सदाशिव-विष्णुनामानः' उपासनार्हा दश देवाः। तत्र हि जीव आचारपालनेन सह शक्तिविशिष्टस्य शक्तिमत आराधनाभिः शक्तिकृपातः शिवत्वप्राप्तिरूपं पाशविमोचनपूर्वकं मोक्षं प्राप्नोति। इति शक्तिदर्शनानुयायिनां मते मोक्षस्वरूपमिति दिक्।

इति शक्तिदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## ९. नारदभक्तिदर्शने—

परमेश्वरेऽमृतस्वरूपा परमप्रेमरूपा या भक्तिस्तया भक्त्या कीर्त्यमानः स परमेश्वरः झटित्येवाविर्भूतः सन् भक्तान् स्वस्वरूपमनुभावयति। इत्थञ्च सर्वसङ्गपरित्यागेन महानुभावानां सेवया च निर्ममो जीवो मायिकबन्धनमतिक्रम्य परमात्मस्वरूपानुभवरूपं मोक्षं लभते, अयमेव परमपुरुषार्थः। अत्र हि कुमारसनकादयो भक्त्याचार्या एव प्रमाणीभूता इति।

तदुक्तं भागवतेन भक्तप्रवणेन महर्षिणा नारदेन—

"सा त्वस्मिन् परमप्रेमरूपा", "अमृतस्वरूपा च"। "कस्तरति कस्तरति मायाम् ? यः सङ्गांस्त्यजति यो माहानुभावं (महानुभावान्) सेवते निर्ममो भवति स कीर्त्यमानः शिघ्रमेवाविर्भवति अनुभावयति च भक्तान्—इत्येवं वदन्ति जनजल्पनिर्भया एकमताः कुमार-व्यास-शुक-शाण्डिल्य-गर्ग-विष्णु - कौण्डिन्य-शेषोद्धवारुणि-बलि-हनुद्विभीषणादयो भक्त्याचार्याः" इति पूर्वोक्तरीत्या मोक्षस्वरूपविवेचनं कृतम्।

इति नारदभक्तिदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## १०. शाण्डिल्यभक्तिमीमांसादर्शने—

परमात्मनि याऽनुरागरूपा परा भक्तिः, तया अनन्यया परभक्त्या जीवस्य बुद्धिः परमात्मविपयिणी भवति, तस्या बुद्धेरपि अन्ततोगत्वा परमेश्वरे लयाद् अतिशयेनान्तं परमात्मप्राप्तिरूपं मोक्षं स्वीकुर्वन्ति भक्त्याचार्याः शाण्डिल्यादय इति तत्सूत्रैरेव ज्ञायते। तथाहि "सा परानुरक्तिरीश्वरे", "अनन्यभक्त्या तद्बुद्धिर्बुद्धिलयादत्यन्तम्" इत्यादिभिः सूत्रैरिति।

इति शाण्डिल्यभक्तिमीमांसादर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## ११. पाणिनिदर्शने—

दार्शनिकवैयाकरणैर्भर्तृहरिप्रभृतिभिरित्थं तावन्मोक्षस्वरूपमङ्गीक्रीयते। तथाहि—व्याकरणेन साधुशब्दानां ज्ञानात् प्रयोगाच्च संजातधर्मविशेषबलाद् विशुद्धेऽन्तःकरणे वर्णपदवाक्यात्मकध्वन्यतिरिक्ता एकाऽखण्डरूपा मध्यमा वाक् प्रत्यगन्तःकरणसन्निविष्टा एवार्थबोधिका। सैव च स्फोटपदवाच्येति साक्षात्कारो भवति। ततोऽपि दृढतराभ्यासाद् मध्यमाया वाचः प्रकृतिभूतां नाभिस्थां पश्यन्तीं वाचं पश्यन्ति साधकाः, ततोऽप्यूर्ध्वं मननाद् मूलाधारस्थां ब्रह्मरूपिणीं परां वाणीं पश्यन्ति, ततश्च ब्रह्मज्ञानादनाद्यविद्यानिवृत्तौ (जीवशब्दतत्त्वाऽभिन्नरूपब्रह्मणोरैक्यरूपः) मोक्ष इति मोक्षमार्गे व्याकरणं प्रथमं स्थानमिति। तथा ह्यभियुक्तैरुक्तम्—

यत्र द्रष्टा च दृश्यश्च दर्शनं चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः॥
विकारापगमे सत्यं सुवर्णं कुण्डले यथा।
विकारापगमो यत्र तामाहुः प्रकृतिं पराम्॥
वाच्या सा सर्वशब्दानां शब्दाच्च न पृथक् ततः।
अपृथक्त्वेऽपि सम्बन्धः तयोर्जीवात्मनोरिव॥
यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः।
एवं जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः॥
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।
तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्॥

पवित्रं सर्वविद्यानाम् अधिविद्यं प्रकाशते।
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्॥
इयं सा मोक्षमाणानाम् अजिह्माराजपद्धतिः।

इत्यादिभिः श्लोकैर्मोक्षस्वरूपम्। इति।

इति पाणिनिदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## १२. वैद्यकादिदर्शने—

उपरितनोक्ततत्तद्दर्शनसिद्धान्तप्रतिपादितमोक्षस्वरूपान्तर्गतमेव वैद्यकदर्शन-ज्योतिषदर्शन-साहित्यदर्शनषट्चक्रवेधककुण्डलिनीयोगदर्शन-तन्त्रसाधनादितत्तद्दर्शनसिद्धान्तानुमोदितं मोक्षस्वरूपम्। अत एव तत्तद्दार्शनिकसिद्धान्तरीत्या पार्थक्येन मोक्षस्वरूपमत्र न विवेचितम्। इत्यलमतिविस्तरेण।

इति वैद्यकादिदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## १३. कणादवैशेषिकदर्शने—

सूत्रभाष्योपस्कारादिरीत्या आत्यन्तिकी दुःखनिवृत्तिरेव मोक्षः (निःश्रेयसम्) इति।

तथा हि—'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति सूत्रम् 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' इति च सूत्रम्। तत्र भाष्यं ज्ञानपूर्वकात्तु कृताद् असंकल्पितफलात्कर्मणो विशुद्धे कुले जातस्य जीवस्य दुःखविगमोपायजिज्ञासया आचार्यमुपसंगम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात्। तज्ज्ञातयोर्धर्माधर्मयोरनुत्पत्तौ पूर्वसंचितयोर्धर्माधर्मयोश्चोप-

भोगान्निरोधे सन्तोषसुखं शरीरपरिच्छेदञ्चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते। तदा निरोधान्निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपसमो मोक्ष इति।

उपस्कारः—

अभ्युदयस्तत्त्वज्ञानं निःश्रेयसम् आत्यन्तिकी दुःखनिवृत्तिस्तदुभयं यतः स धर्मः। अभ्युदयद्वारकं निःश्रेयसमिति मध्यमपदलोपी समासः पञ्चमीतत्पुरुषो वा। स च धर्मो निवृत्तिलक्षणो हीति।

वृत्तिकृद्ग्रन्थः—

अभ्युदयः सुखम्, निःश्रेयसमेककालीनसकलात्मविशेषगुणध्वंस इति।

पुनरुपस्कारः—

निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः। दुःखनिवृत्तेश्चात्यन्तिकत्वं समानाधिकरणदुःखप्रागभावासमानकालीनत्वं युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वं वा। अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावो वा मुक्तिरिति।

पुनश्च कणादसूत्रम्—

'आत्मकर्मसु मोक्षो व्याख्यातः' इति।

अत्रोपस्कारः—

अयमेव शरीरमनोविभागः आत्मकर्मसु सत्सु मोक्षो भवतीत्यर्थः। तत्रात्मकर्मणि तावत्—श्रवणं मननं योगाभ्यासो निदिध्यासनमासनं प्राणायामः शमदमसम्पत्तिः आत्मपरात्मसाक्षात्कारो देहदेशान्तरोपभोग्यपूर्वोत्पन्नधर्माधर्मपरिज्ञानं तद्भोगानुरूपनानादेह-

निर्माणं तयोर्भोगेन प्रक्षयो रागद्वेषलक्षणदोषतुषारदग्धाद्ग्निमधर्माधर्मयोरनुत्पादात् प्रवृत्त्यपाये जन्मापायाद् दुःखापायलक्षणोऽपवर्गः। तत्र षट्पदार्थीयतत्त्वज्ञानमाद्यमात्मकर्म इति। एवमेव कैश्चिदन्यैरप्युक्तम्—'दुःखात्यन्तोच्छेदापरपर्यायनिःश्रेयसपदाभिधेयो मोक्षः' इति।

इति कणादवैशेषिकदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## १४. गोतम न्यायदर्शने—

'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः', 'बाधनालक्षणं दुःखम्', 'तदत्यन्तविमोक्षोऽपवर्गः' इति सूत्राणि।

यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमपैति, दुःखापाये च आत्यन्तिकोऽपवर्गो निःश्रेयसमिति। तेन दुःखेन जन्मनाऽत्यन्तविमुक्तिरपवर्गः। कथम्? उपात्तस्य जन्मनो हानम्, अन्यस्य चानुपादानम्। एतामवस्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। तदभयमजरम् अमृत्युपदं ब्रह्मक्षेमप्राप्तिरिति भाष्यम्। तत्त्वज्ञानेन विरोधितयाऽपहृते मिथ्याज्ञाने कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे, तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ, तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावाद् दुःखाभावादपवर्ग इति।

तस्य दुःखस्यात्यन्तविमोक्षः स्वसमानाधिकरणदुःखासमानकालीनो ध्वंसः। तस्य च जन्मापायादेव सम्भव इत्याशयेन 'दुःखेन जन्मनाऽत्यन्तविमुक्तिरपवर्गः' इति भाष्यम्। दुःखेन दुःखानुषक्तेनेत्यर्थः। इति वृत्तिः।

द्विविध(मुख्यगौण) दुःखावमर्शिना सर्वनाम्ना सर्वेषामात्म-

गुणानां दुःखवदवमर्शाद् अत्यन्तग्रहणेन च सर्वात्मा तद्वियोगाभिधानाद् नवानामात्मगुणानां बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां निर्मूलोच्छेदोऽपवर्ग इत्युक्तं भवति। इति न्यायमञ्जरी।

सोऽयं मिथ्याज्ञानादिकलापेन सर्वतो वियुक्तो मुक्त इत्युच्यते। इति न्यायवार्तिकम्।

स्यादेतत्, महाप्रलयेऽपि मिथ्याज्ञानादिना दुःखान्ते नास्ति वियोग इति, तत्रापि मुक्तिप्रसंग इत्यत आह–सोऽयं मिथ्याज्ञानादिनेति, सर्वत इति। तृतीयार्थे तसिः सर्वेणेति। न च प्रलयावस्थायां सर्वेण वियोगः, कर्माविद्यावासनयोरविनाशात्। मुक्तौ तु तयोरपि विनाशः। कर्मवासना सर्वकार्याणामुत्पादिकाऽवस्थापिका च, तन्निवृत्तौ शरीरादिवत् तत्त्वज्ञानसंस्कारस्यापि प्रलय इत्यशेषविशेषगुणविमुक्तो मुक्त इत्युच्यत इति सिद्धम्। इति न्यायवार्त्तिकतात्पर्यटीका।

तथा च न्यायदर्शने—'अशेषविशेषगुणनिवृत्तिर्मोक्षः' इति सिद्ध्यति। इति दिक्।

इति गोतमन्यायदर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## १५. कपिलसांख्यदर्शने—

अनारब्धविपाकानां कर्मणां तत्त्वज्ञानाग्निना बीजभावे दग्धे सति प्रारब्धविपाकानां कर्मणां तूपभोगेन क्षये सति, शरीरविनाशे प्राप्ते प्रधानस्य कृतप्रयोजनत्वात् तं विज्ञपुरुषं प्रतिनिवृत्तौ 'ऐकान्तिकमवश्यंभावि, आत्यन्तिकमविनाशि' इत्युभयं कैवल्यं दुःखत्रयविनाशरूपं मोक्षं प्राप्नोति पुरुष इति।

तत्र हि :—

धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ॥
ज्ञानेन चापवर्गो विपर्य्ययादिष्यते बन्धः ॥

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ॥
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥
( इति साँख्यकारिकाद्वयम् )

'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः'॥
'यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः'॥
( इति सांख्यसूत्रम् )

एषां ( आध्यात्मिकाधिभौतिकाधिदैविकानाम् ) त्रिविधदुःखानां याऽत्यन्तनिवृत्तिः स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तिः सोऽत्यन्तः परमः पुरुषार्थो मोक्ष इति ।············जीवन्मुक्तिदशायाञ्च प्रारब्धकर्मफलातिरिक्तानां दुःखानामनागतावस्थानां बीजाख्यानां दाहः, विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेष इति । कर्मनिमित्तो वा अविवेकादिनिमित्तो वा भवतु प्रकृतिपुरुषयोर्भोग्यभोक्तृभावः । सर्वथाऽप्यनादितया दुरुच्छेदस्य तस्योच्छेदः परमपुरुषार्थ इत्यर्थः— ( इति सा० प्र० भाष्यम् ) ।

न दुःखविशेषाणां निवृत्तिरभिमता, किन्तु दुःखसजातीयानाम् । भविष्यतामपि हि निवृत्तिरत्यन्तशब्दार्थः । धर्मार्थकाममोक्षाणां पुरुषार्थत्वम्, न तु त्रयाणामत्यन्तत्वम्; क्षयित्वाद् विषयजसुखत्वाद्वा । मोक्षस्य तु न तथा, प्रकाशरूपत्वान्नित्यत्वाच्च । अत उक्तम्—'अत्यन्तपुरुषार्थः' इति । यद्वा तद्वा इति कर्मक्षयाद्वा ज्ञानाद्वा अन्यतो वा इति स्व-स्वामिसम्बन्धोच्छित्त्या संसारोच्छित्तिः पुरुषार्थः ( मोक्षः ) । तदुच्छित्तिः पुरुषार्थ इति वीप्साऽध्यायपरिसमाप्तौ । इति सां० सू० वृत्तिः ।

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ॥
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥
( इति सां० का० )

इति कपिलसाँख्यदर्शनरीत्या मोक्षस्वरूपविवेचनं समाप्तम् ।

## १६. पातञ्जलयोगदर्शने—

'तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्' इति ( यो० सू० साध० पा० सू० २५ )।

'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति'— ( यो सू०, कै० पा० सू० ३४ )।

तस्यादर्शनस्याभावाद् बुद्धिपुरुषसंयोगाभावः, आत्यन्तिको बन्धनोपरम इत्यर्थः। एतद्धानम्, तद्दृशेः कैवल्यम्–पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः, दुःखकारणनिवृत्तौ दुःखोपरमो हानम्, तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम्। इति व्यासभाष्यम् २५ साधनपादे।
कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मनां गुणानां तत्कैवल्यम्, स्वरूपप्रतिष्ठा = पुनर्बुद्धिसत्त्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति। इति व्या० भा० ३४; कैवल्यपादे।

सूत्रमवतारयति–'हेयम्' इति। तस्येति। तस्यादर्शनस्याभावः=दर्शनेन नाशः सत्यज्ञानस्यैव जनिष्यमाणता, ततः संयोगस्याप्यभावोऽत्यन्ताभावः साततिकोऽसंयोगो न पुनः संयोग इत्यर्थः, पुरुषस्य बुद्ध्या सहामिश्रीभावः = महदादेरव्यक्तता प्राप्तिरित्यर्थः, ततश्च दृशेः कैवल्यम् = केवलता द्वैतहीनता, स्पष्टमन्यत्। इति भास्वती २५, साधनपादे।

गुणेति। कृतकृत्यानां गुणानाम् = गुणकार्याणाम्, प्रतिप्रसवः = स्वकारणे शाश्वतः प्रलयः कैवल्यम्। कृतेति। कार्यकारणात्मनां गुणानाम् = महदादिप्रकृतिविकृतीनां त्रिगुणोपादानानाम्, स्वरूपप्रतिष्ठाऽपि चितिशक्तिर्बुद्धिसम्बन्धात् सद्वैता बुद्धिप्रतिष्ठेव प्रतिभासते, बुद्धिप्रतिप्रसवाद् यदाऽद्वैता केवला वेति वाच्या भवति, न पुनर्बुद्ध्युत्थानादकेवलेति च वाच्या स्यात्तदा कैवल्यं पुरुषस्येति। इति भास्वती ३४ कैवल्यपादे।

तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति—'हेयं दुःखम्' इति । 'तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम् ।' इति सूत्रं व्याचष्टे—'तस्येति' । अस्ति हि महाप्रलयेऽपि संयोगाभावः, अत उक्तम्—आत्यन्तिक इति । दुःखोपरमो हानमिति पुरुषार्थता दर्शिता, शेषमतिरोहितम् । इति तत्त्ववैशारदी २५, सा० पा० ।

कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह—'गुणाधिकार' इति । 'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः' ' 'चितिशक्तिरिति' । कृतकरणीयतया पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः=स्वकारणे प्रधाने लयः तेषां कार्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्काराः मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्गे, इति योऽयं गुणानां कार्यकारणात्मनां प्रतिसर्गस्तत्कैवल्यम्=यं कञ्चित्पुरुषं प्रति प्रधानस्य मोक्षः, स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह—'स्वरूपप्रतिष्ठा' इति, अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिर्न चासौ मोक्ष इत्यत आह 'पुनः' इति, सौत्रेति शब्दः शास्त्रपरिसमाप्तौ ॥३४॥ इति तत्त्ववैशा०, कै० पा० ।

तस्या अदर्शनरूपाया अविद्याया अभावाद् अभिभवात् सुवर्णे पृथिव्यभिभूततैजसभास्वरत्ववदिति, संयोगाभावे तु आत्यन्तिकबन्धनोपरमो हानम्, तदेव हानं दृशेरात्मनः कैवल्यम्, गुणैः पुनरसङ्गत्वञ्चेति सूत्रार्थः, व्यूहद्वयं संसारोऽविद्या चेति । तृतीयो मोक्षः, हेयञ्च दुःखमिति, यावद् वासनाराहित्यमात्यन्तिकता ॥२५॥ पात० रहस्यम्, साध० पादे ।

'विमुक्तश्च विमुच्यते' इति, 'स आत्मा कस्मिन् प्रतिष्ठित' इति च श्रुतिस्मृती आश्रित्य मुक्तिस्वरूपं वक्तुं पातनिकामाह—गुणाधिकारेति, अधिकारफलं भोगापवर्गौ तदर्थानां क्रम आरम्भः सृष्टिः, तस्य समाप्तौ अत्यन्ताभावे कैवल्यमिति, 'पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्' इत्युक्तिमाश्रित्याह-पुरुषार्थशून्यानामिति, प्रतिप्रसवो बन्ध्यता

यस्तदीयात्माद्दष्टाऽकृष्टानां गुणानां स एव कैवल्यम् , भोगात्यन्ताभावो महत्त्वाद्युपाधिनिवृत्तौ स्फटिकस्येव स्वच्छतेत्याह—स्वरूपप्रतिष्ठेति । अविद्याकृता बुद्ध्यादौ भोगादिहेतुका चितिच्छायापत्तिलक्षणा तन्निवृत्तौ या चितिरिति सूत्रार्थः, तत्कैवल्यमिति, अविद्योच्छित्तौ पुनर्दुःखात्यन्ताभाव इति । इति ॥ ३४ ॥ पात० रहस्यम् , कैवल्यपादे ।

तदेवं हेयहेयहेतुरूपं व्यूहद्वयं व्याख्याय तृतीयव्यूहस्य सूत्रमवतारयति—हेयमिति । निमित्तमविद्या, 'तदभावात् संयोगाभावो हानं तद्दृशः···कैवल्यम्' । तस्या अविद्याया अभावाद् विनाशाद् बुद्धिपुरुषसंयोगनिवृत्तिद्वारा द्रष्टृदृश्यसंयोगनिवृत्तिर्दुःखहानमित्युच्यते, कार्यकारणयोरभेदोपचारात् । तस्य पुरुषार्थत्वायोक्तम् 'तद्दृशेः—कैवल्यम्' इति । तदेव च हानं पुरुषस्य कैवल्यमित्यप्युच्यते इत्यर्थः । इममेव सूत्रार्थं भाष्यकारः प्रकारान्तरेणाह—तस्येति । बुद्धिपुरुषसंयोगशब्देन कार्यकारणाभेदाद् द्रष्टृदृश्यसंयोगोऽपि ग्राह्यः प्रलयकालीनवियोगव्यावर्तनायात्यन्तिक इति विशेषणं बन्धोपरमस्य, एतद्धानं गुणैः बुद्धिगुणैः दुःखादिभिः पुनरसंयोगः प्रतिबिम्बरूपेणासम्बन्ध इत्यर्थः, । स एव च दुःखभोगनिवृत्तिरूपः स्वतः पुरुषार्थरूप इति भावः । सूत्रस्य फलितार्थमाह—दुखेति हानमित्यन्तेन, व्याख्याते कैवल्यशब्दार्थे 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति गतसूत्रं प्रमाणयति—तदेति । तदा दुःखनिवृत्तौ, अस्य च हानव्यूहस्य चतुर्थपादे विस्तरो भविष्यति, इत्यत्र दिङ्मात्रेण स उक्त इति ॥ २५ ॥ यो० वार्ति०, साधनपादे ।

यदि पुरुषस्य संसारोच्छेदः पृच्छ्यते तदा कुशलस्यास्ति नेतरस्येति प्रश्नवाक्यं विकल्प्य प्रतिवचनं संभवतीत्युत्तरसूत्रमवतारयति—गुणाधिकारेति, । गुणाधिकारः परिणामविशेषः, तत्क्रमसमाप्तौ कैवल्यमिति, ततः 'कृतार्थानाम्' इत्यादिसूत्रेण तात्पर्यतः प्रोक्तं तस्य कैवल्यस्य स्वरूपमवधार्यत इत्यर्थः, पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति, कृतकर्तव्यतया पुरुषार्थशून्यानां गुणानां पुरुषोपकरणानां लिङ्गशरीरात्मकानां प्रतिप्रसवः स्वकारणेऽ-

त्यन्तविलयः स बुद्धेः कैवल्यम्। एतदेव च प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच्यते, तेन पुरुषेण सह पुनरसंयोगात्, यातु धर्माधर्म्यभेदाच्चितिशक्तिः स्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपाऽपाये स्फटिकस्वरूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यमित्यर्थः, परस्परवियोगो ह्युपाधिः + उपाधिमतोरुभयोरेव केवलता = एकाकिता भवति। ते चोभे एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते। तयोश्चाद्यं कैवल्यं पुरुषस्योपचरितमित्युक्तं सांख्यकारिकायाम्—

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिरिति ॥ इति।**

न तु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनिवृत्तिरूपो वा पुरुषार्थः पुरुषस्य तत्र निराकृतः, मोक्षस्यान्यमात्रनिष्ठत्वे पुरुषार्थत्वे मोक्षार्थं प्रवृत्त्यनुपपत्तेः, पुरुषार्थं हि करणानां प्रवृत्तिरिति, इतिशब्दः शास्त्रसमाप्तिसूचनार्थः। भाष्ये कार्यकारणात्मनामिति कार्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीरघटकानामित्यर्थः, न तु कार्यमत्र स्थूलशरीरं तत्सत्त्वेऽपि कैवल्योदयादिति। ननु स्वस्य स्वप्रतिष्ठात्वानुपपत्त्या कथं स्वप्रतिष्ठत्वम्? तत्राह—स्वरूपेति। पुरुषस्य पुनर्बुद्धिसत्त्वासम्बन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः। तस्या इति, स्वरूपप्रतिष्ठायां सदैवावस्थानं पुनरप्रच्यवः कैवल्यं द्वितीयमिति शेष ॥३४॥ यो० वार्तिकम्, कैवल्य पादे।

कैश्चिदपि आचार्यैरित्थमेवोक्तम् :—

**अनात्मनि च देहादौ आत्मबुद्धिस्तु देहिनाम्।**
**अविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥ इति।**

तथा च सर्वतो विरज्यमानस्य तस्य पुरुषविशेषस्य क्लेशबीजानि निर्दग्धशालिबीजकल्पानि प्रसवसामर्थ्यविधुराणि मनसा सार्धं प्रत्यस्तं गच्छन्ति। तदैतेषु प्रलीनेषु निरुपप्लवविवेकख्यातिपरिपाकवशात् कार्यकारणात्मकानां प्रधाने लयः चितिशक्तिः स्वरूपप्रतिष्ठा पुनर्बुद्धि-सत्त्वाभिः सम्बन्धविधुरा वा कैवल्यं लभते इति सिद्धम्। अत एव च महर्षिणा पतञ्जलिना सूत्रेण द्वयी मुक्तिरुक्तेति दिक्।

इति पातञ्जलयोगदर्शनरीत्या मोक्षस्वरूप-

विवेचनं समाप्तम्।

## १७. मीमांसा ( जैमिनि ) दर्शने :—

यद्यपि मीमांसादर्शने सूत्रे सिद्धान्ततया मोक्षो नाङ्गीक्रियते सूत्रकृता महर्षिणा जैमिनिना, किन्तु धर्मानुष्ठानवशादभिमतधर्मसिद्धिः, तेन धर्मेण च स्वर्गादिसिद्धिरिति तैर्जेगीयते; तस्माद्धर्मे स्वतः सिद्ध-प्रमाणभावे वेदे वर्तमाने "ज्योतिष्टोमेन स्वर्गकामो यजेत", "कारीर्या वर्षाकामो यजेत", "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", पुत्रेष्ट्या पुत्रकामो यजेत", "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यादि-विधिभिः सुखात्मकस्य स्वर्गादेरेव प्राप्तिर्विहिता, सैव च मोक्ष इत्यङ्गीकृतत्वात्तैः; "स स्वर्गः स्यात्, सर्वान् प्रत्यविशिष्टत्वात्, "स स्वर्ग" इति–सर्वे हि पुरुषाः स्वर्गकामाः। कुत एतत् प्रीतिर्हि स्वर्गः। सर्वश्च प्रीतिं प्रार्थयते। इति मीमां० अ० ४, पा० ३, सू० १५ संख्याके शावरभाष्ये उक्तत्वाच्च। तथापि नवीनैः श्रीमत्पार्थसारथिमिश्रादिभिर्मीमांसकै-र्मोक्षस्य सत्ताऽङ्गीक्रियत एव। तथाहि शास्त्रदीपिकायां मोक्षवादा-रम्भप्रसंगे "यत्र तु अस्य सर्वमात्मैवाभूत्" इति श्रुतिव्याख्यानावसरे यदपि मुक्तौ आत्मनोऽद्वितीयत्ववचनम, तदपि न प्रपञ्चस्वरूपनिषेधा-र्थम्, किन्तु सत एव प्रपञ्चस्यात्मसम्बन्धनिषेधार्थमेवास्येति वचनात्, न ह्यत्रैतावदुच्यते "यत्र सर्वमात्मैवाभूत्" इति। किं तर्हि "यत्र

त्वस्यस र्वमात्मैवाभूत्" इति। तेनास्यायमर्थः—यत्र यस्यामवस्थायां मुक्तौ इत्यर्थः। अस्यात्मनो दृश्यत्वेन दर्शनसाधनत्वेन दर्शनायतनत्वेन वा न किञ्चिदन्यत्सम्बन्धि विद्यते, किन्तु आत्मैवास्य सर्वं नान्यत्किञ्चित् तदा केन कं पश्येदिति। यथा लोके यस्य न किञ्चिदपि बान्धवो वित्तं वाऽस्ति स एवं वदति—"न मे किञ्चिदस्ति, अहमेव सर्वम्" इति। तत्र सम्बन्ध्यन्तरं न किञ्चिदस्तीत्येतावदेव विवक्षितम्, एवं मुक्तौ आत्मैवात्मनः सर्वमिति सम्बन्ध्यन्तराभावमात्रं विवक्षितम्, न प्रपञ्चस्वरूपाभावः। तस्मान्न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसम्बन्धविलयः (एव मोक्षः) त्रेधा हि प्रपञ्चः पुरुषं बध्नाति, भोगायतनं शरीरं भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाश्च। भोग इति च सुखदुःखविषयोऽपरोक्षानुभव उच्यते। तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयो मोक्षः। तत्र किमिदमात्यन्तिकत्वम्? पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः, अनुत्पन्नानाञ्चात्यन्तिकोऽनुत्पादः। कथमात्यन्तिकानुत्पत्तिः? उत्पादकयोर्धर्माधर्मयोर्निःशेषयोः परिक्षयात्। सोऽयं प्रपञ्चसम्बन्धो बन्धः, तन्मोक्षश्च मोक्ष इति शास्त्र० मो० वा०।

नन्वेवमशेषधर्मक्षयान्मुक्तस्य न किञ्चित्सुखं स्यात्, ततश्चापुरुषार्थो मोक्षः स्यात्। नैष दोषः—नहि धर्मजन्यो मुक्तस्यानन्दः। तथा सत्युत्पत्तिमत्त्वाद् विनाशी स्यात्। तत्रापुनरावृत्तिश्रुतेर्विरोधश्च स्यात्। स्वाभाविकस्तु आत्मानन्दः संसारेणाभिभूतः सन् निर्मुक्तसंसारस्याभिव्यक्तो भोग्यो भवति, स्वाभाविकत्वे चानन्दस्य "आनन्दं ब्रह्म" इत्यादिश्रुतिसहस्रं प्रमाणमेव। इति शा० आन० मो० वादप्रसंगे।

तस्मात्सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः। सुखदुःखोच्छेदश्च धर्माधर्मयोरुच्छेदात्, धर्माधर्मयोरुच्छेदश्चोत्पन्नानां धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेनात्मज्ञानेन च विरोधात्, उत्पाद्यानाञ्च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात्, विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानाञ्चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात्, असति शरीरारम्भे

पूर्वशरीरनिपाते चाशरीरेऽवस्थितो मुक्तो भवति। इति शा० मु० कथनप्रसंगे।

यद्वा

"इज्याचारदमाऽहिंसादानस्वाध्यायकर्मणाम्।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्॥"

इत्येवमादौ आत्मज्ञानेऽपि धर्मशब्दप्रयोगात् श्रवणमननिदिध्यासनादिसहकृतस्यात्मदर्शनस्य अनाद्यनिर्वचनीयभावरूपाज्ञाननिवृत्तिजनकत्वस्य केनाऽपि प्रमाणेनाऽज्ञातत्वाद् योगजन्यज्ञानस्यैव विशिष्टवेषेण परमधर्मत्वोक्तेर्ज्ञानेऽपि धर्मत्वमेवेति युक्तं प्रभावल्यामात्मज्ञाने धर्मत्वसमर्थनम्। "स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति" इत्यत्र हि शरीरातिरिक्तमेवात्मस्वरूपं स्थिरं ज्ञानसुखाद्याश्रयो विवक्ष्यते, न शरीरमिति शरीरस्वर्गगमनानुपलम्भप्रत्यक्षेण न तद्वाक्यमपि बाधितम्।

अत्रात्मनो ज्ञानाश्रयत्वमेव, न तु ज्ञानरूपत्वमिति निरासो हि भाष्यकृता यः कृतः स प्रकृताभिप्रायः, न तु वस्तुगत्या। अत एव "एक आत्मनः शरीरे भावात्" इत्यत्र शङ्करभगवत्पादैर्यद्यपि आत्मस्वरूपं शबरस्वामिना निरूपितम्, तथापि न तत्सूत्ररूढम्, इह तदारूढमित्युक्तम्। तथा च शबरस्वामिनामद्वैतमते एवाग्रहः। क्षणिकविज्ञानात्मत्वमत्र यथाखण्डितम्, न तथा स्थिरविज्ञानरूपत्वमपि। इति मीमांसाशास्त्रसारे।

तथा चोक्तं श्लोकवार्त्तिके भट्टपादैः—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन॥

॥ इति ॥

इति मीमांसा ( जैमिनि ) दर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

## १८. अद्वैतवेदान्त ( श्रीशङ्कर ) दर्शने :—

"आनन्दरूपब्रह्मावाप्तिः समूलसर्वानर्थनिवृत्तिश्च मोक्षः" इति।

तथाहि—आनन्दात्मब्रह्मावाप्तिश्च मोक्षः शोक( सकारणबन्ध )-निवृत्तिश्च। "ब्रह्मवेद ब्रह्मैव भवति" (मु० ३-२-९), "तरति शोकमात्म-वित्" ( छा० १-१-३ ) इत्यादिश्रुतेः। इति वेदान्तपरिभाषाप्रयोजन-परिच्छेदे।

न च संस्काराङ्गीकारे विदेहमुक्त्यभावः, प्रारब्धकर्मणोऽन्ते तत्त्व-ज्ञानानुसन्धानादेव संस्कारनिवृत्तौ तत्सिद्धेः ( विदेहमुक्तिसिद्धेः )।

अथ मन्यसे—अविद्याया निवृत्तत्वात् संस्कारस्य चानुपादानत्वाद् निरुपादानो देहेन्द्रियादिः कथं सिद्ध्येदिति ? तर्हि तत्त्वसाक्षात्कारे जातेऽप्याप्रारब्धक्षयमविद्यालेशानुवृत्त्या जीवन्मुक्तिरस्तु—इति विवरण-प्र० सू० १, वर्ण० १।

तस्माद् ब्रह्मप्राप्तिश्रुतिः ( ब्रह्मविदाप्नोति परम् ) अविद्यानिवृत्तौ जीवस्य स्वरूपभूतब्रह्माभिव्यक्तिविषया, इति विव० प्र० सू० ४, वर्ण० २।

तस्मान्न कर्मनिमित्तः शरीरादिसम्बन्धः, किन्त्वविद्याकृतः। स च ( शरीरादिसम्बन्धरूपः संसारः ) तत्त्वज्ञाननिवर्त्यः। अत एव श्रुति-स्तत्त्वदर्शिनो यथापूर्वं संसारित्वं व्यावर्तयति—"स चक्षुरचक्षुरिव सकर्णोऽकर्ण इव" इत्यादिका।

तर्हि तत्त्वज्ञाने सति सद्यः शरीरपातः स्यादिति चेत्, न; "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति श्रुत्या प्रारब्धकर्मशेष-समाप्तिपर्यन्तमवस्थानावगमात्। इति वि० प्र० सं० सू० ४, वर्ण० २।

तस्मात् स्फटिकस्येव रागाद्यपकर्षणेन स्वरूपाविर्भावो ब्रह्मप्राप्तिः, ब्रह्मरूपत्वाद्विज्ञानात्मनः, तथा च "परं ज्योतीरूपसंपद्य स्वेन रूपेणाभि-

निष्पद्यते" इत्युक्तम् । अन्यरूपनिष्पत्तौ स्वशब्दानुपपत्तेरिति । तत्राहुराचार्याः—

न च मोक्षः फलं तस्य साध्यो मोक्षो न चापरः ॥
अविद्यास्तमयो मोक्षः सा संसार उदाहृता ।
विद्यैव चाद्वया शान्ता तदस्तमय उच्यते ॥ इति ।

तथा "ब्रह्मैव सन् ब्रह्माप्येति" इति । तदेवं स्वरूपस्थितिलक्षणत्वाद् मोक्षस्य न कार्यता प्रागपि स्वरूपस्य भावात्; आगन्तुकस्यास्वरूपत्वात् । न चान्यत्वम् , यतोऽविद्यापगम एवोक्तेन प्रकारेण मुक्तिः । इति ब्रह्मसिद्धौ नियोगकाण्डे ।

अतोऽविद्या कल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । नापि मोक्षस्य विकार्यत्वमुत्पाद्यत्वं वा, तस्यानित्यत्वदोषप्रसंगात् । नापि तस्याप्यत्वम् , स्वात्मस्वरूपत्वे सति अनाप्यत्वात् । नापि संस्कार्यत्वं मोक्षस्य; संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा । न तावद्गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । इति शा० भा० अ० १, पा० १, अधि० ४, सू० ४ ।

"एवं मुक्तिफलानियमस्तदवस्थावधृतेः तदवस्थावधृतेः" यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद्विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः । एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यादित्याशङ्क्याह—एवं मुक्तिफलानियम इति । न खलु मुक्तिफले कश्चिदेवंभूतो विशेषप्रतिनियम आशङ्कितव्यः । कुतः—तदवस्थावधृतेः । मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते । ब्रह्मैव हि मुक्त्यवस्था, न च ब्रह्मणोऽनेकाकारयोगोऽस्ति । शा० भा० अ० ३, पा० ४, अधि० १७, सू० ५२ इति ।

तस्मादनतिशयानन्दस्वभावस्यात्मनोऽविद्यातिरोधानमेव बन्धः, विद्यानिमित्तस्तदस्तमयो मोक्ष इति सिद्धम् । इति मोक्षस्वरूपं स्थापितम् ।

एवमेव जीवन्मुक्तिरपि स्थापिता ।

तथाहि :—

अविद्यालेशशब्देन मोहाकारान्तरोक्तितः ।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥
लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः ।
उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिद्ध्यति ॥ इति ।

इत्यादिचित्सुख्याख्यग्रन्थैः ।

अथापि—

दुःखं सुखविरोधीति तन्नाशोऽपि हि न स्वतः ।
पुमर्थः सुखमात्रं तु तथा चित्सुखदर्शने ॥ इति ।

तस्मादुदाहृतश्रुतिसूत्रानुसारिभिर्मुक्तानां जीवानां यावत्सर्वमुक्तिवस्तुसच्चैतन्यमात्रत्वाऽविरोधिबद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्यतदनुगुणगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिःसन्धिबन्धपरमेश्वरभावापत्तिरादर्तव्येति सिद्धमिति । इति सिद्धान्तलेशे चतुर्थप० ।

मुक्तौ न दुःखोच्छेदमात्रम्, किन्तु निरतिशयानन्दस्फुरणमपि ।

तदुक्तम्—

तस्मादविद्याऽस्तमयो नित्यानन्दप्रतीतितः ।
निःशेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः ॥ इति ।

तत्र सुखादौ हि पुमर्थता नाऽपरकीयत्वप्रयुक्ता, नापि स्वकीयत्वप्रयुक्ता; गौरवात्; किन्तु साक्षात् क्रियमाणतया; सम्बन्धस्य चानित्यत्वसाधनपारतन्त्र्यादेरिवावर्जनीयसन्धिकत्वादित्यत्रैव मुक्तौ भामती - वेदान्तकल्पतरु - कल्पतरुपरिमलप्रभृतिग्रन्थकर्तॄणामद्वैतमतानुयायिनामाचार्याणां तात्पर्यमिति दिक्।

माधवाचार्यैरपि सर्वदर्शनसंग्रहे उक्तम् :—

"ततश्च तत्त्वमस्यादिविद्यया तदविद्यानिवृत्तौ निरतिशयानन्दात्मलाभरूपपरमपुरुषार्थः ( मोक्षः ) सेत्स्यतीति ।'

एवमेव त्रैविद्यवृद्धैरप्युक्तम् :—

नीचानां वसतौ तदीयतनयैः सार्धं चिरं वर्धित-
स्वज्ञातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा ।
संवादे महदादिभिः सह वसन् तद्वद्भवेत् पूरुषः
स्वात्मानं सुखदुःखजालकलितं मिथ्यैव धिङ् मन्यते ॥
दाता भोगपरः समग्रविभवो यः शासिता दुष्कृतां
राजा स त्वमसीति रक्षितमुखाच्छ्रुत्वा यथावत्स तु ।
राजीभूय यथार्थमेव यतते तद्वत्पुमान् बोधितः
श्रुत्या तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥ इति ।

इत्यद्वैतवेदान्त(श्रीशाङ्कर)दर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम् ।

## १९. द्वैतवेदान्त ( मध्व ) दर्शने :—

यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या ।

"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"; "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इत्यादिश्रुतिस्मृतिभ्यः।

कर्मणा स्वधमः प्रोक्तः प्रसादः श्रवणादिभिः।
मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमोत्तमः॥
प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः॥
श्रवणं मननञ्चैव ध्यानं भक्तिस्तथैव च।
साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते॥
न चैतानि विना कश्चिद् ज्ञानमाप कुतश्चन।

इति नारदीये।

"स्मृतेश्च" इति व्याससू० अ० ४, पा० ३, सू० ११।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रति संचरे।
परस्यान्ते परात्मानः प्रविशन्ति परं पदम्॥ इति च॥

"अप्रतीकालम्बनान्नयतीति स बादरायणः, उभयथा च दोषात् तत्क्रतुश्च" व्याससू० अ० ४, पा० ३, सू० १५।

अप्रतीकाश्रया ये हिं ते यान्ति परमेव तु।
स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम्॥
ब्रह्मणा सह संप्राप्ते संहारे परमं पदम्।

इति गारुडवचनम्।

उभयत्रोक्तदोषात् प्रतीकालम्बनात्परं नयति। स यथाकामो भवति। तत्क्रतुर्भवति। यत्क्रतुर्भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदा सम्पद्यते इति

श्रुतेश्चात्र कर्मोपासनमेव अन्यान् कार्यं नयतीति भगवन्मतम्। इति पूर्णप्र० भाष्यम्। "मुक्तः प्रतिज्ञानात्" इति सूत्रे च-मुक्त एवात्रोच्यते। "अहरहरेनमनुप्रविशत्युपक्रमते च न तत्र मोदते न प्रमोदते न कामान् अनुभवति बद्धो ह्येष तदा भवति, अथ यथा एनं मुक्तोऽनुप्रविशति मोदते प्रमोदते च कामाँश्चैवानुभवति" इति बृहच्छ्रुतौ च प्रतिज्ञानात्। इति मध्वभाष्यम्।

एतेषां द्वैतवादिनां मध्वाचार्याणां मते हि भक्त्या त्यागेन ध्यानेन च जीवस्य परमात्मसालोक्यादीनां मध्येऽन्यतमस्य प्राप्तिरेव परम-पुरुषार्थः (मोक्षः) इत्यत्रैव तात्पर्यम्। इति।

पूर्णा आत्मतत्त्वप्रतिपादकशास्त्रे प्रज्ञा मतिर्यस्य स पूर्णप्रज्ञः, स एव मध्वाचार्यः, तत्प्रवर्तितं दर्शनमेव पूर्णप्रज्ञदर्शनपदेनाभि-धीयते इति।

एतेषां मते हि जगत्कर्तृत्वादिरहितं दुःखामिश्रितं परिपूर्णं सुखमेव मोक्षः। स च विष्णुप्रसादादेव लभ्यः। विष्णुप्रसादश्च तद्गुणोत्कर्ष-ज्ञानादेव भवति, नाऽभेदज्ञानात्। तदुक्तम् (तैः)—

तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते।
समाश्रिताद् ब्रह्मतरोरनन्ताद् निःसंशयं मुक्तिफलं प्रयान्ति॥

इति मध्वदर्शने संक्षेपः।

इत्थमेव सर्वदर्शनसंग्रहे माधवाचार्यैरप्युक्तम्। इति।

इति द्वैतवेदान्त (श्रीमध्व) दर्शनरीत्या मोक्षस्वरूप-
विवेचनं समाप्तम्।

२०. द्वैताद्वैतवेदान्त( निम्बार्क )दर्शने हि :—

अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात्।
मुक्तं च बद्धं किल बद्धमुक्तं प्रभेदबाहुल्यमथैषु बोध्यम्॥२॥
(इति वेदान्तरत्नमञ्जूषाकारिका)

मुक्ता नाम अनादिकर्मात्मकाविद्या निरूपितप्रकृतितत्कार्य-सम्बन्धदुःखादिविनिर्मुक्ताः। तेऽपि द्विविधाः—"निरतिशयानन्दरूप-भगवद्भावापत्तिलक्षणमुक्तिवन्त एके";

बहवो ज्ञानतपसा पूता मद्भावमागताः।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

इत्यादिश्रीभगवदुक्तेः।

स्वस्वरूपानन्दापत्तिमात्रेण संतुष्टाश्चान्ये। तत्र भगवद्भावापन्नानां तदिच्छानुरूपनिजेच्छयाऽनन्तविग्रहादिपरिग्रहोऽपि श्रुतिसिद्धो भगवदवतारादिवत्। "स एकधा भवति द्विधा भवति त्रिधा भवति पञ्चधा भवति सहस्रधा भवति अपरिमितो भवति" इत्यादिवचनात्।

( वेदान्तरत्नमञ्जूषा प्रथमकोष्ठः )

**उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ॥**
**सनन्दनाद्यैः मुनिभिस्तथोक्तं श्रीनारादाद्याखिलतत्त्वसाक्षिणे ॥६॥**

( वेदा० र० मञ्जू० कारिका )

( तत्र ) उपासनप्रयोजनमाह—प्रहाणयेऽज्ञानतमोऽनुवृत्तेरिति। अज्ञानतमोऽनुवृत्तेः प्रहाणये इति योजना। अनादिकर्माख्याज्ञानमेव तमःस्वरूपादितिरोधानस्वभावकत्वात्। तस्यानुवृत्तिः सम्बन्धः श्रीपुरुषोत्तमप्राप्तिप्रतिबन्धकः। तस्य प्रहाणये ध्वंसायेति यावत्। "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति श्रवणात्।

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥**
**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥**

इति भगवद्वचनाच्च। ( इति वेदा० र० म० द्वि० कोष्ठः )।

प्रसादेनेश्वरीयेणाविद्याया भञ्जनं ततः ।
आविर्भूतं सुखं पूर्णं सैव मुक्तिरिहोच्यते ॥२१॥

प्रसादेनेति । ततोऽविद्याभङ्गाद् निःशेषाऽविद्यानिवृत्तिपूर्वकस्वपूर्णानन्दाविर्भाव एव मुक्तिः ॥२१॥

सर्वसाधारणमुक्तेः स्वरूपमाह—

स्वरूपेण स्थितिर्मुक्तिरज्ञानध्वंसपूर्वकम् ।
सा समा सर्वमुक्तानां सद्यः क्रमेण गच्छताम् ॥५८॥

स्वरूपेणेति । निःशेषाऽविद्यानिवृत्तिपूर्वकं स्वयोग्यतया पूर्णानन्दावाप्तिः सर्वेषां साधारणीत्यर्थः ॥ ५८ ॥

मुक्तानां स्वयोग्यतानुसारेण चतुर्विधमुक्तिप्राप्तिरित्याह—

चातुर्विध्यं विमुक्तेः स्यात् पुंसां योग्यतया सताम् ।
समीपत्वं च सारूप्यं सलोकत्वं हरेः सदा ॥५९॥
सायुज्यञ्च हरेः सर्वाः स्युरनावृत्तिलक्षणाः ।
सायुज्यं लीनता विष्णोर्विग्रहे स्वाधिकारतः ॥६०॥
वृक्षे लीनाः खगा भिन्ने वने लीना मृगास्तथा ।
एवं मुक्ता हरेर्भिन्ना रमन्ते तत्र मोदतः ॥६१॥

चातुर्विध्यमिति । सतां जीवानां यथा सारूप्यादिमुक्तेर्योग्यता तथैव तां मुक्तिं तान् प्रापयति हरिरित्यर्थः । सारूप्यं चतुर्भुजादिसमानरूपवत्त्वम्, तच्च हरिप्रसादेन स्वयोग्यमुक्तिप्राप्त्युत्तरं तल्लोकाद्बहिः स्थितानामपि सम्भवति । सालोक्यञ्च भगवल्लोकावस्थानम्, तच्चासमानरूपाणामपि तल्लोकस्थानां शुकसारिकादीनां योषिताञ्च संभवति । हरेः सदेति सर्वत्रान्वयः । हरेर्व्यापकत्वेऽपि समीपत्वादिकं रूपविशेषमादाय ॥ ५९ ॥

अनावृत्तिर्लक्षणं स्वरूपं यासां ताः। सायुज्यस्वरूपमाह—सायुज्यमिति ॥ ६० ॥

यथा खगमृगादीनां वृक्षादिषु संश्लेषविशेष एव लयः, न तु ऐक्यम्, एवं मुक्तानां केषाञ्चित् संश्लेष एव सायुज्यम्, न तु ऐक्यम्; अन्यथा वृक्षादिभ्यः खगादीनामिव हरौ लीनानां मुक्तानां ततो निर्गमनं न स्यात्। प्रसिद्धा हि हरौ लीनानां शिशुपालादीनां ततो निर्गतिः। सह युनक्ति इति सयुक्, सयुजो भावः सायुज्यमिति व्युत्पत्तेः। यद्देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति, अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति—इत्यादिश्रुतिषु सायुज्यशब्दस्य सम्बन्धविशेषे प्रसिद्धेः। न त्वत्र सायुज्यशब्दस्यैक्यपरत्वशङ्का, नहि मुक्तेः प्राग् जीवानां जीवान्तरेषु ऐक्यस्याद्वयवादिनोऽपि सम्मतिः। अत एवान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ता इति श्रुतिर्व्याख्याता ॥ ६१ ॥

इति श्रुतिसिद्धान्ताऽपरनामके वेदान्तसिद्धान्तसंग्रहे
प्रथमोऽध्यायः ॥

अथ प्रयोजनं निरूपयति—

**मुकुन्दभावसंप्राप्तिः शास्त्रे प्रोक्तं परं फलम्।**
**सैव सायुज्य-साधर्म्य-ब्रह्मसाम्यादिसंज्ञिका ॥ १ ॥**

मुकुन्दस्य श्रीपुरुषोत्तमस्य परब्रह्मणो भगवतो भावो मुकुन्दभावः, तदसाधारणधर्मः सार्वज्ञादिः। तस्य लेशसंप्राप्तिरिति यावत्। "मद्भावायोपपद्यते" "पूता मद्भावमागताः" इति श्रीमुखोक्तेः। "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इत्यादिश्रुत्या सार्वज्ञादियोगविधानात्। इति साध्यात्मसुधातरङ्गिणी वेदान्तकारिकावलीसप्तमतरङ्गः। "तन्निष्ठस्य मोक्षोपदेशात्" व्यास सू० १।१।७॥

सदीक्षित्रात्मादिपदार्थभूतकारणनिष्ठस्य विदुषस्तद्भावापत्तिलक्षण-मोक्षोपदेशान्न प्रधानं सदात्मकशब्दवाच्यम् ॥१।१।७॥ इति वे० पा० सौ०।

तस्मिन् सदादिशब्दाभिधेये ईक्षितरि तेजोऽवन्नादिकर्तरि निष्ठा निदिध्यासनाऽपरपर्यायिलक्षणा यस्य विदुषः स तन्निष्ठः, तस्य मोक्षोपदेशात्। तथा हि "तत्त्वमसि" इति मुमुक्षोः कारणात्मकत्वानुसन्धान-मुपदिश्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति ब्रह्मभावापत्तिलक्षणमोक्ष उपदिश्यते। मुमुक्षुर्यावच्छरीरान्न विमोक्ष्यते प्रारब्धकर्मभोगप्रतिबन्धात् तावदेवास्य मुमुक्षोश्चिरं भवति, भुक्ते तु कर्मफले प्रतिबन्धाभावात्। अयं ब्रह्मभावं सम्पत्स्यते। विमोक्ष्ये सम्पत्स्ये इत्युभयत्रोत्तमपुरुषप्रयोगः प्रथमपुरुषे छान्दसत्वाद् ज्ञेयः। इति वे० कौस्तु०।

"मुक्तः प्रतिज्ञानात्" व्यास सू० ४।४।२।

बन्धाद् विमुक्त एवात्र स्वेन रूपेणाभिनिष्पद्यते इत्युच्यते। कुतः? "य आत्मा अपहतपाप्मा" इत्युपक्रम्य "एवं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति प्रतिज्ञानात्। इति वेदा० पारि० सौर० ४।४।२॥

ननु स्वाभाविकरूपस्य नित्यप्राप्तत्वाद् बद्धावस्थातो मुक्तावस्थायां को विशेष इत्यत आह—

"कर्मात्मिकाऽविद्यावशात् कार्यकारणरूपप्रकृतिसंपरिष्वक्तो नानातापसन्तप्तो नानातर्कविमोहितोऽनादिबद्ध इत्युच्यते। स नित्यप्राप्तमपि निजं रूपं न जानाति। मुमुक्ष्वस्थायाञ्च शास्त्राचार्यानुग्रहाद् ज्ञातस्वरूपोऽपि कार्यकारणप्रकृतिसंसर्गात् स्वेन रूपेण नाभिनिष्पद्यते। स एव विद्यामहिम्नाऽर्चिरादिमार्गेण परं ज्योतिरूपसम्पन्नः सर्वबन्धविनिर्मुक्तः स्वेन रूपेणाभिनिष्पद्यते, तदा मुक्त इत्युच्यते इति विशेषोऽस्ति।" इति वेदा० कौ० ।४।४।२॥

इति पूर्वेषां सर्वेषां ग्रन्थानामालोडने सति अयमेव निष्कर्षो निःसरति यत् "निरतिशयानन्दरूपभगवद्भावापत्तिलक्षणा मुक्तिरेव ( सर्वविद्याऽनर्थमूलाऽविद्यानिवृत्तिपुरःसरम् ) परमपुरुषार्थरूपा" पुरुषोत्तमोपासनाल्लभ्या इति द्वैताद्वैत( निम्बार्क )दर्शने मुक्तिस्वरूपं निश्चितम् ।

इति द्वैताद्वैतवेदान्त( निम्बार्क )दर्शनरीत्या
मोक्षस्वरूपविवेचनं समाप्तम् ।

## २१ शुद्धाऽद्वैत( वल्लभाचार्य )दर्शने—

भजधातोः सेवार्थकत्वेन सेवालक्षणं श्रीमदाचार्यचरणोक्तमाहुः—

चेतस्तत्प्रवणं सेवा फलरूपा तु मानसी ।
तत्सिद्ध्यर्थं देहवित्तजनिः कार्या ततो भवेत् ॥८२॥
संसारदुःखनाशो हि ब्रह्मात्मत्वावबोधनम् ।
ब्रह्मज्ञस्य परप्राप्तिरानन्दव्रततौ स्फुटा ॥८३॥

संसारेत्यादि । संसारोऽहंता ममतारूपः । ब्रह्मात्मत्वावबोधनमिति । "ऐतदात्म्यमिदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतिसिद्धम्, "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इत्यादि स्मृतिसिद्धं सर्वस्य जगतो ब्रह्मत्वम् । तस्य ( ब्रह्मात्मत्वस्य ) अवबोधनं याथार्थ्यज्ञानमित्यर्थः । तर्हि ब्रह्मज्ञानस्य किं फलमित्याहुः—ब्रह्मज्ञस्येत्यादि । श्रीमदाचार्यचरणैर्भाष्ये ब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता संपद्यते । तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयत इत्युक्तम् ।

पुरुषोत्तमलाभः कथम् ? तत्राहुः—

भक्त्या लाभो हि निर्दिष्टो भक्तिश्चाचार्यसंश्रयात् ॥
श्रीमदाचार्यचरणभजनादेव नान्यथा ॥८४॥

ब्रह्मभावं तु सम्पाद्य परमानुग्रहाद् विभुः ॥
गृहस्थितं स्वीयजीवं समुद्धरति यत्नतः ॥८९॥
ये तु ज्ञानैकसन्निष्ठास्तेषां च लय एव हि ॥
भक्तानामेव भवति लीलास्वादोऽतिदुर्लभः ॥९९॥

ये त्विति। "ऋते ज्ञानान्नमुक्तिः"। "ज्ञानादेव च कैवल्यम्"इति॥ लय एवेति। "न स पुनरावर्तते" इति श्रुतेः। ननु सिद्धान्तेऽक्षरब्रह्मणा सहैक्ये भगवतोद्धारः क्रियत इति; "न स" इति श्रुतिविरोध इति चेन्न; अनया संसारावर्तनं निषिध्यते, न तु ब्रह्मातीतपुरुषोत्तमप्राप्तिः।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥

इत्यादिभगवद्वाक्यात्।

विशेषतो निरूपणं तु भाष्यविद्वन्मण्डनादौ। यत्राक्षरप्राप्तावपि न पुनरावर्त्तते, तत्र तदतीतप्राप्तौ तत्संभावनाऽपि नेति।

भक्तानामेवेति।

मुक्तानामपि सिद्धानां नारायणपरायणः ॥
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥

इति भागवतवाक्यात्।

नारायणभक्तस्यातिदौर्लभ्यम् ॥ इति सप्र काशे शुद्धाऽद्वैतमार्तण्डे जीवा द्विविधाः—दैवा आसुराश्च। तत्र दैवा अपि द्विविधाः—मर्यादा-मार्गीयाः, पुष्टिमार्गीयाश्च। ........। तत्र मुक्तिः पुष्टिमार्गीयाणां मर्यादामार्गीयाणाञ्च। इति प्रमेयरत्नार्णवे जीवस्वरूपनिरूपणे।

पुष्टिभक्तिश्चतुर्विधा—शुद्धपुष्टि-पुष्टिपुष्टि-मर्यादापुष्टि-प्रवाहपुष्टि—भेदात्। तत्र पुष्टिभक्तित्वेन रूपेणैक्येऽपि प्रकारभेदाद्भेदः। एवमेतत्फल-

स्यापि नित्यलीलान्तःप्रवेशत्वेनैक्येऽपि प्रकारभेदो भक्त-गोप-पशु-वृक्षादिरूपेण बोध्यः। एतदेव तारतम्यञ्च। तथा सति सर्वेषां प्रवाहादि-भेदभिन्नानां पुष्टिस्थानामेकमेवालौकिकसामर्थ्यरूपं फलं नित्यलीलाऽन्तः-पातित्वशब्दवाच्यम्। "तदाऽपीतेः संसारव्यपदेशात्" इति तत्त्वसूत्रे, तदा-नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायाम् इति भाष्योक्तेः। नित्यलीलाश्च शुद्धिपुष्टिस्था व्रजसम्बन्धिन्यो ज्ञेयाः। तादृशनित्यलीलान्तःपाते सति पुनः प्रकारविशेषस्तु इष्ट एव। "आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधी-नाम्" इति वाक्यात्। अत आधिदैविकबृहद्वृन्दावनादौ भक्तरूपेण गोपादिरूपेण वा स्थित्वा रसानुभवः—इति प्रमेयरत्नार्णवेऽधिकारनि०।

सेवाफलग्रन्थव्याख्याने—अलौकिकसामर्थ्यम्, सायुज्यम्, सेवो-पयोगिदेहो वैकुण्ठादिषु, इत्यनेन यत्फलत्रयमुक्तम्, तत्रालौकिक-सामर्थ्यं पुष्टिमार्गीयाणां फलम्, शिष्टं फलद्वयं तु मर्यादाभक्ताना-मिति ज्ञेयम्। मूलेऽपि "यादृशी सेवना प्रोक्ता" इत्यत्र सेवना-शब्देन मर्यादासेवा पुष्टिसेवा चोक्तेति बोध्यम्। विवृत्तौ फलत्रयं सेवाद्वयस्योक्तम्। तत्र प्रथमं पुष्टिसेवायाः, शिष्टं फलद्वयं तु मर्यादा-सेवाया इति विवेकः। अत एव सायुज्यं सेवोपयोगिदेहप्राप्तिश्चान्यत्रापि मर्यादाभक्तस्योक्ता।

देहभावे दृढे तु स्यात् भक्तानां कृष्णदासता।
सायुज्यं वाऽन्यथा तस्मिन् गङ्गातीरे न संशयः॥ इति॥

(नवमस्कन्धनिबन्धे)

तदविरोधादत्रापि तत्फलद्वयं मर्यादाभक्तस्यैवेति निश्चयः। इति प्रमेयरत्नार्णवेऽधिकारनिरूपणे।

पुरुषोत्तमलाभे यो मुख्यहेतुतयोदितः।
तस्य सर्वात्मभावस्य स्वरूपमिह वर्ण्यते॥ १॥

भगवद्विषयको निरुपधिस्नेहो भक्तविशेषः सर्वात्मभावः। तथा हि ........अत आत्मनो भावो भगवद्विषयोऽत्यादरेण सम्पादनीयः। तस्य सिद्धौ तिरोधाननाशे सर्वत्र पदार्थमात्रे वस्तुतोऽपि भगवद्रूपे परमानन्दरूपस्य पुरुषोत्तमस्य स्फूर्तौ सर्वत्रात्मभावो भवति। तथा च सर्वस्मिन्नात्मभावः सर्वात्मभाव इति फलितम्। इति प्रमेयर० सर्वा० नि०।

इत्यादिपूर्वोक्तानां निबन्धानां सम्यगालोडने सति तन्मते जीवस्योपासकस्य श्रीभगवदनुग्रहेणैव श्रीकृष्णाख्ये परमात्मनि पतिभावस्य प्राप्तिरेव मोक्षः परमपुरुषार्थपदवाच्य इति सिद्ध्यति।

इति शुद्धाऽद्वैत( श्रीवल्लभाचार्य )दर्शनरीत्या
मोक्षस्वरूपविवेचनं समाप्तम्।

## २२. अचिन्त्यभेदाभेदवेदान्त (महाप्रभुश्रीचैतन्यदेव) दर्शने–

"श्रीकृष्णः सत्यपदवाच्यः" इत्थंभूतं ज्ञानमेव जीवकल्याणहेतुत्वेन पर्याप्तम्। महाप्रभुश्रीचैतन्यदेवस्यायमेव भावः; पश्चात् श्रीगोस्वामिपादैरचिन्त्यभेदाभेदवादस्य यद्दार्शनिकं रूपं तद्रूपवत्त्वं प्रापितः। तन्मते हि ज्ञानोपासनादौ प्रमाणत्वेनाङ्गीकृतं श्रीमद्भागवतपुराणमेव प्रधानम्। ततश्चापरं ब्रह्मसूत्रभाष्यादिकमपि। एतेषां मुख्याचार्याणां मते हि प्रेमभक्तिद्वारैव परब्रह्म-परपुरुषवासुदेवश्रीकृष्णसान्निध्यप्राप्तिरेव मुक्तिर्जीवस्य परमपुरुषार्थः।

इत्यचिन्त्यभेवेदाभेददान्त ( श्रीमहाप्रभुश्रीचैतन्यदेव )-
दर्शनरीत्या मोक्षस्वरूपविवेचनं समाप्तम्।

## २३. विशिष्टाऽद्वैतवेदान्त( श्रीरामानुजाचार्य )दर्शने—

सम्मतं हि सर्वसमयेष्वात्मज्ञानं निःश्रेयसहेतुरिति, श्रूयते च "पृथक् आत्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "आत्मानं चेद्विजानीयात्" "तरति शोकमात्मवित्" "ब्रह्मविदाप्नोति परम्" इत्यादिः। इति सिद्धित्रये आत्मसिद्धौ।

तद्व्याख्यायाञ्च :—

अथवा तत्पदेन "फलमतः उपपत्तेः" इति ब्रह्मसूत्ररीत्या मोक्षस्य परमेश्वरप्रसादरूपत्वं बोध्यते। इति स्वामिश्रीराममिश्रशास्त्रिणः।

आत्मस्वरूपञ्च बद्धमुक्तनित्यभेदेन त्रिविधम्। बद्धा इत्युच्यन्ते संसारिणः, मुक्ता निवृत्तसंसाराः, नित्या इत्युच्यन्ते कदापि संसारमप्राप्ताः शेषशेषाशनादयः। इति तत्त्वत्रयम् (ग्रन्थः)। ननु मुक्ताः के इत्याकांक्षायां मुक्ता इत्यादि, ते चानादिकर्मप्रवाहप्रयुक्ते संसारसम्बन्धे वर्तमाने मोक्षरुचिप्रतिबन्धके कर्मविशेषेऽनुभवेन वा, सामान्येनानुष्ठितैः प्रायश्चित्तकर्मभिर्वाऽनभिसंहितफलैरत्युत्कटैः प्रासादिकपुण्यैर्वा, नष्टे तेन हेतुना जायमानदशायां भगवत्कटाक्षेण जातेन सत्त्वोद्रेकेण मोक्षरुचौ जातायां सद्गुरुसमाश्रयणसंप्राप्तवेदान्तवेद्यपरब्रह्मज्ञानात् तत्प्राप्तिरूपमोक्षसिद्ध्यर्थं स्ववर्णाश्रमोचितानि कर्माणि फलसङ्गकर्तृत्वत्यागपूर्वकमनुष्ठाय "धर्मेण पापमपनुदति" इत्यादितः⋯⋯ भगवत आकस्मिककृपया, उपायान्तरविषये दुष्करत्वादिबुद्धिमूलकप्रपदनमूलकभगवत्प्रसादेन वा, सांसारिकसकलदुरितेषु निवृत्तेषु आविर्भूतस्वरूपा भगवत्कैंकर्यैकभोगाश्चेतनाः 'अविशेषेण निवृत्तसंसारबन्धानाम् "मुक्ताः" इत्यभिधानात्'। भगवदनुभवे रुचिं विना तत्समाश्रयं कृत्वा ( सद्गुरुसमाश्रयणं कृत्वा ) संसारनिवृत्तिं कृत्वा देशविशेषं गत्वा स्वस्वरूपानुभवं कुर्वाणाः "केवलाः" इत्युच्यन्ते। इति तत्त्वत्रयभाष्यम्।

तेन (भगवता) कटाक्षितस्तदनुभवजनितहर्षप्रकर्षात् सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैंकर्यरतिराविर्भूतगुणाष्टक उत्तरावधिरहितब्रह्मानुभववान् यः स मुक्त इत्युच्यते। मुक्तस्य ब्रह्मसाम्यापत्तिश्रुतिस्तु भोगसाम्यमाह। इति यतीन्द्रमतदीपिकायाम् अष्टमोऽवतारः।

साम्यापत्तिश्रुतिरिति। "निरञ्जनः परमं साम्यमुपैति" (मु० ३,१, ३) इति श्रुतिरित्यर्थः। "मम साधर्म्यमागताः" (गी० १४–२) इत्यत्राप्येवमेव। मोक्षो हि सायुज्यमेव, न तु सालोक्यं सारूप्यं सामीप्यं वा। तेषां स्वर्गादिवत् फलान्तरत्वात्। सयुग्भावो हि सायुज्यं भोगसाम्यमिति यावत्। सयुग्शब्दश्च भिन्नयोरेकत्र साधारणयोगं दर्शयति। "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतेरपि साम्ये एव तात्पर्यम्।

तदुक्तम्—

लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥इति॥

मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन।
इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत ॥

इति च

इत्यत्र मोक्षमित्यस्य मोक्षत्वेन भासमानं सालोक्यं सारूप्यञ्च न प्रार्थये, किन्तु वस्तुतो मोक्षरूपं सायुज्यमेवेच्छामीत्यर्थः। एतेन सालोक्यादिभेदेन मोक्षे तारतम्यमस्तीत्यपास्तम्। सालोक्यादिषु क्वचिन्मुक्तिशब्दप्रयोगस्तु भाक्तः। मुक्तितारतम्यं वदद्भिस्तु मुक्तिरेव शिक्षणीया, सर्वकर्मनिवृत्तौ स्वतः प्राप्तब्रह्मानुभवे तारतम्याऽयोगात्। इति यती० दी० प्रकाशेऽष्टमोऽवतारः।

**आविर्भूतस्वरूपा निरवधिकसुखब्रह्मभुक्तिस्तु मुक्तिः सेवात्वाद् दुःखकृत्सा भवति यदि न तद्धर्मिमानेन बाधात्। पाप्मा चास्मिन्नुपाधिः स च न खलु तदा पुण्यपापव्यपाया-दात्मानो विष्णुशेषा इति च सुखमयी सा स्वरूपानुरूप्यात् ॥६४॥**

"परशेषतैकरसस्वरूपाविर्भावयुक्तेत्यर्थः" इति आविर्भूतस्वरूपा इत्यस्य व्याख्यानम्।

नन्वग्निहोत्रदर्शपूर्णमासादिसाधनविशेषात् तत्साध्यस्वर्गे तार-तम्यमङ्गीकुर्मः, तथा मोक्षेऽपि स्यात्, अन्यथा कथमाप्तशास्त्रे क्वचित् सालोक्यादिमुक्तिभेदकथनमिति शङ्कते—सालोक्येति।

**सालोक्याद्याः प्रभेदा ननु परिपठिताः क्वापि मोक्षस्य, मैवं सायुज्यस्यैव तत्त्वात् तदितरविषये मुक्तिशब्दस्तु भाक्तः। तस्मिँस्ते च त्रयः स्युस्तदपि च सयुजोर्भाव इत्यैकरस्यं युक्सामर्थ्यं लोकसाम्यादिवदपरधियां तावतैनैक्यमोहः ॥६७॥**

तेषु मुक्तिशब्दो न मुख्य इत्यभिप्रायेणाह—मैवमिति।

मुख्यं मुक्तिशब्दविषयमाह—सायुज्यस्येति। अन्यत्र प्रयोगः कथमित्यत्राह–तदितरेति। इति सर्वार्थसिद्धियुतस्तत्त्वमुक्ताकलापः। यत्तु मोक्षदशायामहमर्थो नानुवर्तते इति—तदपेशलम्। तथा सति आत्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्। न चाहमर्थो धर्ममात्रम्; येन तद्विगमेऽपि अविद्यानिवृत्तौ इव स्वरूपमेव तिष्ठेत, प्रत्युत स्वरूपमेवाहमर्थ आत्मनः। ज्ञानं तु तस्य धर्मः, "अहं जानामि" "ज्ञानं मे जातम्" इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव। इति श्रीभाष्यम् १–१–१ ॥

अथ मुक्तौ अहमर्थाननुवृत्तिमनूद्य दूषयति—यत्तु इत्यादिना। तुः अर्थगौरवविशेषे। अपेशलम् असाधु इत्यर्थः। कुत इत्यत्राह-तथा सतीति। सौगतान् ज्ञानसंतत्युच्छेदं मोक्षं वदतः स्वरूपनाशस्याऽपुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाश एवोक्तः स्यादित्यर्थः। नैयायिकाद्युक्ते मोक्षेऽप्यपुरुषार्थत्वं तुल्यम्, दुःखनिवृत्तिः सुखप्राप्तिश्च उभयं पुरुषार्थः। अत्रापुरुषार्थभूतदुःखाभावात् पुरुषार्थान्वयः, सुखाभावाद् अपुरुषार्थान्वयश्चेति मुक्तेः पुरुषार्थापुरुषार्थमिश्रत्वं हि स्यात्। अहमर्थो हि आरोपितः, अतः तद्विगमे स्वरूपनाशो न प्रसज्येत इत्यत्राह-न चेति। कुत इत्यत्राह-अहमिति। अहमर्थधर्मतया ज्ञानप्रतीतेरेव पूर्वोक्तहेतोरेवेत्यर्थः। अहमर्थात्मत्वसमर्थनेन उपजीवनेन स्वरूपनाशप्रसंग उक्तः। इति श्रुतप्रका० १।१।१। नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः, अविद्याश्रयत्वयोगस्य तद (अनर्हत्व)-र्हत्वासंभवात्। यथोक्तम्—

परमात्मनोर्योगः परमार्थ इतीष्यते।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः॥ इति।
(विष्णुपु० २।४।२७)

मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्—
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलयेन व्यथन्ति च॥ इति।
(गी० १४।२)

इहात्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा॥ इति।
(विष्णुपु० ६।७।३०)

आत्मभावमात्मनः स्वभावम्, नह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य। वक्ष्यति च—"जगद्व्यापारवर्जं प्रकरणाद् असन्निहितत्वाच्च" (ब्रह्मसू० ४।४।१७) इति। "भोगमात्रसाम्यलिङ्गाच्च" (ब्र० सू० ४।४।२१)। "मुक्तोपसृप्यव्यपदेशाच्च" (ब्रह्मसू० १।३।२) इति च। इति श्रीभाष्यम्। "फलमत उपपत्तेः" इति (ब्रह्मसू० ३।२।३७)।

उक्तम्—उपासिषोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वम्, प्राप्यस्य च परमपुरुषस्य निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मात्परत्वञ्च, अतः परमुपासनं विवक्षन् उपासीनानां परस्मादेवास्मात्पुरुषात् तत्प्राप्तिरूपमपवर्गाख्यं फलमिति सम्प्रति ब्रूते। तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिकमपि फलम्। अत एव परस्मात् 'पुरुषाद्भवति' इति सामान्येन "फलमतः" इत्युच्यते। कुत एतत्? उपपत्तेः–स एव हि सर्वज्ञः सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाराधित ऐहिकामुष्मिकभोगजातं स्वस्वरूपावाप्तिरूपमपवर्गञ्च दातुमीष्टे; नह्यचेतनं कर्मक्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥ श्री भा० ३।२।३७)। इत्यादिपूर्वोक्तग्रन्थानां विचारेण "श्रीपरमपुरुषभगवत्प्राप्तिरूपो हि सायुज्याख्यो मोक्षो जीवस्योपासकस्य सिद्धयति" इति श्रीरामानुजाचार्याणां मतम्।

इति विशिष्टाऽद्वैतवेदान्त( श्रीरामानुजाचार्य )दर्शनरीत्या
मोक्षस्वरूपविवेचनं समाप्तम्।

२४. शुद्धविशिष्टाद्वैतवेदान्त ( श्रीरामानन्दाचार्य ) दर्शने तु—

परं पदं सैवमुपेत्य नित्यमसानवो ब्रह्मपथेन तेन।
सायुज्यकादिप्रतिलभ्य तत्र प्राप्यस्य सन्नन्दति तेन साकम् ॥१८६॥
सीमान्तसिन्ध्वाप्लुत एव धन्यो गत्वा परब्रह्मसुवीक्षितोऽनिशम्।
प्राप्यं महानन्दमहाब्धिमग्नो नावर्तते जातु ततः पुनः सः॥१८७॥
( इति श्रीवैष्णवमताब्जभास्करः )

सत्संगाद्भवनिस्पृहो गुरुमुखाच्छ्रीशं प्रपद्यात्मवान्
प्रारब्धं परिभुज्य कर्मसकलं प्रक्षीणकर्मान्तरः।
न्यासादेव निरङ्कुशेश्वरदयानिर्मूलमायान्वयो
हार्दानुग्रहलब्धमध्यधमनिद्वाराद्बहिर्निर्गतः ॥ ९ ॥

मुक्तोऽर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमद्
ग्लौऽविद्युद्वरुणेन्द्रधातृसहितः सीमान्तसिन्ध्वाप्लुतः।
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन् परब्रह्मणः
सायुज्यं समवाप्य नन्दति समं तेनैव धन्यः पुमान् ॥१०॥

( इति श्रीरामार्चन पद्धतिः )

"तदेवं भगवदनन्यभक्त्यैव भगवत्प्राप्तिसिद्धेः" इति श्रीजानकी-भाष्यम्।

"एवं मुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः" इति व्याससू० ३।४।५१ ॥

किं विद्यायामुत्पन्नायां सत्यामिहैव जन्मनि मुक्तिर्भवति, जन्मान्तरे वा ? इति संशये विद्योत्पत्तौ सत्यामिहैव मुक्तिर्भवतीति प्राप्ते आह—"एवं मुक्तिफलानियमः" इति। यथा श्रवणादिकर्मणां पौष्कल्ये इहैव ( सहैव ) विद्याजन्म भवति, नान्यथा, तथा सततस्मृतिरूपायां ध्रुवस्मृतिरूपायां विद्यायां सत्यामिहैव जन्मनि ब्रह्मप्राप्तिरूपा मुक्तिर्भवति; स्मृतेः सातत्यध्रुवत्वाभावे जन्मान्तरे भवतीत्यनियमः। कुतः ? तदवस्थावधृतेरिति। "सत्त्वशुद्धौ ध्रुवा स्मृतिः", "स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवायाः स्मृतेरेव कर्मबन्धविमुक्तिहेतुत्वावधारणात्। "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" "ततस्तु तं पश्यति ध्यायमानः", "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति ध्यायमानस्तदेकस्मरणचिन्तनपरो यदा तं पश्यति तदा तत्परमसाम्यमुपैतीति मुक्त्यवस्थाया अवधारणाच्च—इति श्रीजानकीभाष्यम्।

तत्र ( परं ज्योतिरुपसंपद्येत्यादिश्रुतौ ) च मुक्त्यवस्थैव प्रतिपाद्यते। परं ज्योतिः परमात्मानमुपसंपद्य याथार्थ्येनावगम्य स्वेनानन्दरूपेण तिष्ठतीति प्रथमश्रुत्यर्थः। द्वितीयायास्तु—विज्ञानघनो जीवः पाञ्चभौतिकं देहं परित्यज्य सर्वाधारे परमात्मनि विनश्यति लीनो भवति, देवादिनामरूपपरित्यागादित्यर्थः। अत्र दृष्टान्तः—"स यथा सैन्धवखिल्यः" इत्यादि। इति श्री-आनन्दभाष्यम्।

"एवं मुक्तिफलानियमस्तदवस्थावधृते स्तदवस्थावधृतेः" इति व्याससू० ३।४।५१ ॥

किं विद्यायामुत्पन्नायामिहैव जन्मनि मुक्तिर्जन्मान्तरे वेति संशये-विद्योत्पत्तौ सत्यामिहैव मुक्तिर्भवतीति प्राप्ते आह—एवं मुक्तिफलानियम इति। यथा कर्मणां पौष्कल्ये इहैव विद्याजन्म भवति, न चान्यथा। तथा सततस्मृतिरूपायां विद्यायां सत्यामिहैव जन्मनि ब्रह्मप्राप्तिरूपा मुक्तिरुपपद्यते। अन्यथा जन्मान्तरेऽपि सम्पद्यते। अतोऽनियमः। कुतः? तदवस्थावधृतेः। "सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्षः" इति ( छा० २७।२६।२ )। ध्रुवायाः स्मृतेरेव कर्मबन्धविमुक्तिहेतुत्वावधारणादिति सर्वमनवद्यम्। अभ्यासोऽध्यायसमाप्त्यर्थः ॥५१॥ इति श्रीमदानन्दभाष्यम्।

इत्युपरितननिर्दिष्टानां श्रीमत्परमाचार्यसत्सदाचारपरभक्तिप्रचारकयतीन्द्रवरश्रीमद्रामानन्दमहाप्रभूणां तदनुयायिमहापुरुषाणाञ्च सद्ग्रन्थानां सम्यग् मनने कृते सति "निष्कामकर्मसमुच्चितेन चिदचिद्ब्रह्मेति तत्त्वत्रितयविज्ञानेन सहानन्योपासनया दृष्टदर्शने नष्टे सति परात्परतरतत्त्वात्मकः परमकारुणिकः परमपुरुषोत्तमो भक्तवत्सलः श्रीजानकीजानिः श्रीरामः स्वानन्योपासकार्थं स्वयाथात्म्यानुभवानुगुणनिरवधिकानन्दरूपं पुनरावृत्तिशून्यं सायुज्याख्यं परमं मोक्षं स्वसाकेताख्ये नित्ये परमे पदे प्रयच्छति" इति उक्तं मोक्षस्वरूपं तत्र।

तथा च स्मृतिः—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ इति ॥

(श्रीमद्भगवद्गीता० ८।१५)

एवं च श्रुत्यादयोऽप्यधोनिर्दिष्टाः प्रामाण्येनाङ्गीकृता भवन्ति। तथा हि—

रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ इति ॥

(पूर्वरामता० प्रथ० मं० ५)

गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः ।
वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः ॥
गाणपत्यादिमन्त्रेषु कोटि-कोटि-गुणाधिकाः ।
मन्त्रास्तेष्वप्यनायासफलदोऽयं षडक्षरः ॥
षडक्षरोऽयं मन्त्रः स्यात् सर्वाघौघनिवारणः ।
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः ।
कृतं दिने यद् दुरितं पक्षमासर्तुवर्षजम् ।
सर्वं दहति निःशेषं तूलराशिमिवानलः ॥ इति ॥

(उत्तररामतापिनी)

दुराचाररतो वापि मन्नामभजनात् कपे ।
सायुज्य[1]मुक्तिमाप्नोति न तु लोकान्तरादिकम् ॥ इति ॥

(मुक्तिकोपनिषत्)

---

१. सालोक्य पाठान्तरम् ।

मरीचिमण्डले संस्थं बाणाद्यायुधलाञ्छितम् ।
द्विहस्तमेकवक्त्रं च रूपमाद्यमिदं हरेः ॥
सर्वेषामवतराणामवतारी रघूत्तमः ।
रामपादनखज्योत्स्ना परं ब्रह्मेति गीयते ॥ इति ॥

(अगस्तसंहिता)

तस्मिन्साकेतलोके विधिहरहरिभिः सन्ततं सेव्यमाने ।
दिव्ये सिंहासने स्वे जनकतनयया राघवः शोभमानः ॥इति॥

(वाराहसंहितावचनम्)

नारायणोऽपि रामांशः शङ्खचक्रगदाधरः ।
आनन्दो द्विविधः प्रोक्तो मूर्तश्चामूर्त एव च ॥
अमूर्तस्याश्रयो मूर्तः परमात्मा नराकृतिः ॥ इति ॥

(पंचरात्रवचनम्)

इत्यादिश्रुतिस्मृतिसत्सुक्तिभिराचार्यपादैः(यतिवरश्रीरामानन्दाचार्यैः) श्रीरामस्वरूपस्य रामोपासनाया राममन्त्रस्य च महत्त्वं प्रदर्श्य मोक्षस्वरूपमपि परमप्राप्यत्वेन प्रदर्शितम् ।

इति शुद्धविशिष्टाऽद्वैतवेदान्त( यतिवरश्रीमद्रामानन्दाचार्य ) —
दर्शनरीत्या मोक्षस्वरूपविवेचनं समाप्तम्

इति मोक्षस्वरूपविवेचनं समाप्तम् ।

समाप्तश्चायं ग्रन्थः ।



॥ श्रीसीतारामाभ्यां नमः ॥

# मोक्षमीमांसा

श्रीमते रामानन्दाय नमः

ब्रह्मा विष्णु महेश सुर श्रुति ऋषिमुनिजनवृन्द,
जेहि विनवत है अहर्निश सीतापतिरघुनन्द ।
ताके पदपंकज सुमिरि भाषा करौ सुहाय,
मोक्ष-मीमांसा ग्रन्थ को मानव हित मनलाय ॥

इस मोक्ष-सीमांसा ग्रन्थ में प्रसंगवश यह विचार उपस्थित होता है कि मोक्षरूप परम पुरुषार्थ के अधिकारीमु मुक्षु जन ही सर्वशास्त्र सिद्ध हैं, अतएव अर्थतः प्राप्त जीवों का भेद भी आरम्भ में दिखाना अत्यावश्यक प्रतीत होता है। इसलिए मूल ग्रन्थ में संक्षेपतः जीव भेद इस प्रकार निर्दिष्ट किया गया है—तथाहीत्यादि :—बद्ध, मुक्त और नित्य इस प्रकार जीव के तीन भेद हैं। इन तीनों में बद्ध जीव वे हैं जो आनादि काल से अविद्या ( माया ) वश हो चतुर्दश भुवनात्मक ब्रह्माण्ड में ब्रह्मादि से लेकर कीट पतंगादि पर्यन्त शरीरधारी चेतन विशेष हैं। उन चेतन बद्धजीवों का पुनः अवान्तर भेद शास्त्रवश्यत्व तथा शास्त्रावश्यत्व रूप से द्विविध माना गया है। अर्थात् शास्त्रीय आज्ञा में बँधे हुए मनुष्य देवादि हैं उनमें शास्त्रवश्यत्व है, दूसरे पशु, पक्षी आदि जीवों में ( प्राक्तन अशुभ कर्मों की अत्यधिकता होने के हेतु धर्मादिज्ञानशून्यत्वनिमित्तक केवल प्रारब्ध कर्मों का उपभोग करने वाले होने के नाते क्रियमाण कर्मों के अनधिकारी हैं; अतएव उनमें शास्त्राऽवश्यत्व ही प्रायः

देखा जाता है। इसीसे मूल में दिखाया गया है कि करणों ( चक्षुरादि इन्द्रियों ) के द्वारा विशेष-विषयों की विशेष-विशेषरूप से जानकारी करने वाले बद्ध जीवों ( देव मनुष्यादि ) में ही शास्त्रवश्यत्व है। तदितर पशु-पक्षी एवं स्थावरादि जीवों में प्रायः शास्त्रावश्यत्व ही रहता है। शास्त्रों के अधीन रहने वाले जीवों में भी कुछ जीव बुभुक्षु ( विषयभोगाभिलाषी ) होते हैं। दूसरे कुछ अल्प संख्या में मुमुक्षु (मोक्षाभिलाषी) भी होते हैं। उन बुभुक्षुओं (धन-पुत्र-कलत्रादिरूप अर्थ) स्वर्गादिसाधन यज्ञ-व्रत-पूजनादिरूप धर्म तथा ऐहिक सुखसाधन-रूप भोजनादि तथा पुत्रादि उत्पादनरूप कामपरायणजीवों में भी अधिकतर अर्थ कामपरायण ही हैं। पर कुछ अल्पसंख्यक जीव धर्मपरायण भी देखे जाते हैं। उनमें अर्थकामपरायण वे हैं जो मनुष्यादि होकर भी सच्छास्त्रों एवं सद्ग्रन्थों के विचारने की अपेक्षा से केवल पशुवत् खानपानादि को ही मनुष्य जीवन का लक्ष्य मान रक्खे हैं, अतएव वे जीव पुनर्जन्म में तथा लोक एवं परलोक में विश्वासश्रद्धा आदि को भी खो बैठे हैं। साथ ही इतने गिर गये हैं कि इस पञ्चभूतात्मक शरीर को ही चेतन आत्मा के रूपमें मानने के आदी हो गये हैं। धर्मपरायण जीव वे हैं जो मूलोक्त धर्मलक्षणों से लक्षित धर्मपरायण जीव ( तप-तीर्थ-दानादिरूप ) धर्म में ही प्रधानरूप से तत्पर रहते हैं, वे ही जीव देहातिरिक्त आत्मा में तथा परलोक आदि में भी विश्वास रख कर श्रद्धा-ज्ञानादि से सम्पन्न होते हुए धर्मपरायण पुरुष विशेष प्रसिद्ध होते हैं। इसी प्रकार मुमुक्षु जीव भी दो प्रकार के हैं—एक कैवल्यरूप मोक्षाभिलाषी हैं तो दूसरे सारूप्य-सालोक्य-सामीप्यादिरूप मोक्षाभिलाषी हैं। इस प्रकार भारतीय दर्शनों की रीति से मोक्षस्वरूप तथा मोक्षसाधनादि का विवेचन करना अनिवार्य हो जाता है।

प्रसंग वश उन भारतीय दर्शनों के भेद भी दिखाये जाते हैं। आस्तिकदर्शन एवं नास्तिक दर्शन के रूप में भारतीय दर्शन द्विधा

